॥ अथश्रीवसुधाकरग्रंथः प्रारभ्यते॥ शुभमस्तु॥

ॐ
बुद्ध
तत्त्वः

ऐ॰सु॰ ॥श्रीगणेशायनमः ॐतत्सत्सुखाब्धिसनुर्नतिगिरांयोऽभास्पदंमाययाजीवेशादिविभेदभाक्खपवनाग्न
भूमिक्रमण्डलनया स्थिपौस्थूलतमांसिवीक्ष्यतुमतिंलोकेऽवतीर्णःप्रभुर्लिङ्गात्माकरुणार्द्रधीर्विजयतांश्री
१ साम्बमूर्त्तिःशिवः १ क्षोणीमण्डलमण्डनेधनवतांप्रज्ञावतांसौख्यदे वंशच्छिद्रनदखण्डनेजयपुरेदंष्ट्रान्सु
हुर्दण्डयन् नीत्यासंप्रतिपालयन्विनयिनःपाखण्डिनःखण्डयन् अस्तिश्रीनृपरामसिंहसुमतिःसत्पण्डितान्मण्डय
न्॥२॥तस्यश्रीरविवंशमानससरःपद्मस्यसत्कीर्तिसद्गन्धाकृष्टसुधीरवीरमधुपव्रातस्यसन्ततेर्नृपतेः॥भूदेवाम
रवन्दनीयचरणश्रीमेनकानन्दिनी॥स्वान्तानन्दनवास्तवन्दनरतानक्तिःसमस्तेश्वरे॥३॥नानाकर्मजपुण्यप
बीजनवसंस्काराङ्कुराधीष्ठितोजाताकल्पलतेवशैवजनसत्सङ्गाम्बुसिक्ताभृशम्॥संदृष्टानिजपार्श्वव
र्तिजनसद्वृन्दमध्येऽर्केविस्तृतातजैशार्चनपुण्यकीर्तिस्फुरत्सिंविद्वान्सुरत्नानयत्॥४॥तज्ज्ञात्वाशिवपादपङ्कजर
जःश्रीमान्स्वरूपोनृपःश्रीमद्भावूररामसिंहनृपतिर्वीरैर्वमाणोर्युतः॥कार्यःसंग्रहरूपबोधदस्यतत्सुष्ठुयथा
बुद्ध्ययंश्रीमच्छैववसुधाकरोमतिमतांव्हादायसंतन्यते॥५॥अथश्रीशिवार्चनस्यधर्मार्थकाममोक्षहेतुत्वा
त्स्वकारःप्रदर्श्यते॥तत्रपाराशरपुराणे॥ब्राह्मणःसर्वसिद्ध्यर्थंकुर्याच्छंकरपूजनं॥ब्रह्मविष्ण्वादिदेवानां॥

र्चनात्किंचित्पुण्यमभ्यधिकं क्वचित्॥ इतिविज्ञाय यत्नेन पूजनीयः सदाशिवः॥४॥ आकाशं लिंगमित्याहुः पृथिवी तस्य पीठिका
आलयः सर्वभूतानां लयनाल्लिंगमुच्यते॥५॥ यो लिंगं द्वेष्टि संमोहात्सर्वदेवनमस्कृतं॥ स रौरवं नरकगामी स्यात्तस्य संभाष
णादपि॥६॥ लिंगपुराणे॥ लिंगे तु पूजिते सर्वमर्चितं स्याच्चराचरं॥ तस्मात्सदार्चनं कार्यं लिंगस्य च महात्मनः॥७॥ अ
नेकजन्मसाहस्रं भ्राम्यमाणः स्वयोनिषु॥ कः समाप्नोति वै मुक्तिं लिंगार्चनमृते नरः॥८॥ स्कंदपुराणे॥ मनसा चिंतयेद्य
स्तु पूजयामि हरं वरं॥ अशक्तो नास्ति चेद्द्रव्यं यस्य वापि स्वमध्यमे॥ स तया श्रद्धया पूतो विमुक्तः सर्वपातकैः॥९॥ य
स्य तत्त्वं॥ ब्रह्मादयोपि न जानंति॥ यस्माच्च ब्रह्मादय उत्पद्यंते॥ तस्य पूजनेन चतुर्वर्गप्राप्तिरित्यत्र किमाश्चर्यं॥ तथा च
भागवते॥ देवान्प्रति ब्रह्मणो वाक्यम्॥ नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वं॥ विदुः प्रमाणं बलवीर्ययोर्वा तस्या
त्मतंत्रस्य क उपायविंदेत्॥ यज्ञो विष्णुः॥ महाभारते दानधर्मे श्रीकृष्णवाक्यं॥ ईक्षितुं च महादेवं न मे शक्तिरभूत्तदा॥ ततो मामब्रवी
द्देवः पश्य कृष्ण मम चक्षुस्तु च॥१॥ तत्रैव उपमन्युवाक्यं॥ श्रीकृष्णं प्रति॥ यं न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः॥ स्तोतव्यमर्च्यं वंद्यं च कः
स्तोष्यति जगत्पतिं॥२॥ तत्रैव युधिष्ठिरं प्रति भीष्मवाक्यं॥ ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च॥ ब्रह्मादयः पिशाचांता
यं हि देवा उपासते॥३॥ महादेवं प्रति उपमन्युक्तं तत्रैव॥ सृजद्दक्षिणांगात् ब्रह्माणं लोकसंभवम्॥ ॥

वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥ १ ॥ युगांते चैव संप्राप्ते रुद्रमीशोऽसृजत्प्रभुः ॥ स रुद्रः संहर
न्कृत्स्नं जगत्स्थावरजंगमम् ॥ १ ॥ तत्रैव श्रीकृष्णं प्रति उपमन्युवाक्यं ॥ नास्ति शार्वसमो देवो नास्ति शार्वसमा ग
तिः ॥ नास्ति शार्वसमो दाने नास्ति शार्वसमो रणे ॥ १ ॥ क्वचिद्गुणे शिवस्य विष्णुसाम्यादिप्रदर्शनं तु ॥ त्रिवक्त्रवि
वरस्य ॥ सत्यत्वप्रत्यायनार्थं ॥ तथा च महाभारते हरिवंशे श्रीकृष्णं प्रति शिववाक्यं ॥ पुरा मेनाकमाश्रित्य त
पस्त्वं व्यचरो यदा ॥ तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाक्रहि ॥ अजेयस्त्वमजय्यस्त्वं मत्तः शूरतरस्तथा ॥ भ
वितासीत्यवोचं यत्तत्तथा न तदन्यथा ॥ इति ॥ अत एव रामायणे ॥ विष्णोः शिवेन सह संग्रामे ॥ अधिकं मेनिरे
विष्णुमित्यत्र मेनिरे इत्युक्तम् ॥ तथा च ब्रह्मादिजनकत्वेन तदुपास्यत्वेन तदज्ञाततत्त्वबलवीर्यकत्वेन च शि
वस्य निरस्तसाम्यातिशयत्वात्सर्वार्थसाधनं महापातकादिसर्वाघहरं नित्यं च तत्पूजनमवश्यमेव कर्तव्यम्
॥ ॥ इति श्रीमत्स्वामिसच्चिदानंदविरचिते शैवसुधाकरे शिवपूजोत्कर्षवर्णनं नाम प्रथमः किरणः ॥
१ ॥ एवं च शिवपूजनं भस्मरुद्राक्षधारणं विना न कार्यं तदुक्तं लैंगे ॥ विना भस्मत्रिपुंड्रेण विना रुद्राक्षमा
लया ॥ पूजितोपि महादेवो न तस्य फलदो भवेत् ॥ १ ॥ कंचिद्ब्राह्मणं प्रति विष्णुवचनं सूतसंहितायाम् ॥

विभूतिधारणंत्यक्त्वात्यक्त्वारुद्राक्षधारणं॥ मामंत्र्यजयविश्वेशंशिवंलिंगस्वरूपिणं॥१॥ सनत्कुमारसंहि
तायामपि॥ यथैवचांडालोच्छिष्टंश्राद्धार्थेनोपयुज्यते॥ भूतिपर्युषितंयच्चविनिर्भस्मैवंशिवार्चनं॥१॥ दाया
दहीनोनरःपुनर्मृतःपिंडमवाप्स्यति॥ तथाभस्मविहीनोपिशिवार्चनफलंपरम्॥२॥ यथाछत्रानुरहितोध्व
ध्वरोनैवशोभते॥ अशेषसाधनोपेतंभस्महीनंशिवार्चनं॥३॥ विभूतिर्भसितंभस्मक्षारंरक्षेतिभस्मनः॥
भवंतिपंचनामानिपंचभिर्हेतुभिर्भृशं॥४॥ ऐश्वर्यकारणाद्भूतिर्भस्मसर्वाघभक्षणात्॥ भासनाद्भसितंशोकंक्षा
रणात्क्षारमापदां॥ रक्षारक्षोगणेभ्यश्चरक्षणात्परिकीर्तितं॥ देवीभागवते॥ कीकटेषुविदेशेषुयत्रभूतिवि
भूषणः॥ मानवस्तत्रवसेन्नित्यंकाशीक्षेत्रसमंहितत्॥१॥ तथानास्यज्ञानंपरीक्षेतनकुलंनव्रतंतथा॥ त्रिपुंड्रांकि
तभालेनपूज्यएवहिनारद॥ तथा॥ श्वपचोपिवरेण्योहिभूतिशासनमैश्वरं॥ सोपियांगतिमाप्नोतिनतांयज्ञशतैर
पि॥ येघोराराक्षसाःप्रेतायेचान्येक्षुद्रजंतवः॥ त्रिपुंड्रधारिणंदृष्ट्वापलायंतेनसंशयः॥२॥ भस्मधारणंशि
वपूजायामेवकर्तव्यंइत्येवंनियमोनास्ति॥ किंतुसर्वेष्वपिकर्मसुभस्मधारणंकार्यं॥ तथाबृहज्जाबाले॥ ये
भस्मधारणंत्यक्त्वाकर्मकुर्वंतिमानवाः॥ तेषांनास्तिविनिर्मोक्षःसंसाराज्जन्मकोटिभिः॥१॥ महापातकयुक्तानां

वृर्वजन्मकृसर्वतः॥त्रिपुंड्रोद्धूलनंदृष्टोजायतेकृदंडंबुध॥इति शिवरहस्ये॥सर्वकर्मबहिर्भूतोभस्मधारण
वर्जितः॥भस्मनारहितंकर्मवृथाभवतिसर्वथा॥१॥विभूतिधारणंत्यक्त्वाकुर्वन्नेमतलामपि॥तत्फलंनसमा
प्नोतिपतितोपिभविष्यति॥२॥संध्याशिवार्चनादीनिकर्माण्येतानिवस्तुतः॥वैदिकानिततस्तेषुकर्तव्यंभस्म
धारणं॥३॥यथोपवीतरहितैःसंध्यानक्रियतेद्विजैः॥तथासंध्यानकर्तव्याविभूतिरहितैरपि॥४॥विभू
तिधारणंत्यक्त्वायदिसंध्यांकरोतिसः॥तत्पवैस्त्रिवयेनासौनाधिकारीतदाद्विजः॥५॥यथाधीत्यांत्यजोवे
दान्प्रत्यवैतितथाद्विजः॥प्रत्यवैतिनसंदेहःसंध्याकृद्भस्मवर्जितः॥६॥नसंविशंतिपापानिभस्मानिष्टेत
तःसदा॥कर्तव्यमतियत्नेनब्राह्मणैर्भस्मधारणं॥७॥यत्कृतंभस्मनिष्ठेनश्रीमहादेवसाद्व्रजनं॥तत्सर्वा
मीदृष्टंतस्मात्कर्तव्यंभस्मधारणं॥८॥उद्धूलनत्रिपुंड्राभ्यामलंकृततनुःशिवं॥योर्चयिष्यतितत्पुण्योनु
द्विकोवाभविष्यति॥९॥शिवगीताटीकायांवसिष्ठः॥नतत्स्नानंनतज्ज्ञानंनतद्ध्यानंजपोनसः॥त्रिपुंड्रेणविनायेन
विहितेणयदनुष्ठितं॥१॥देवीभागवते॥नगायत्र्युपदेशोस्तिभस्मनोधारणंविना॥ततोधृत्वैवतस्माग्रेगायत्री २
जपमाचरेत्॥१॥गायत्रीमूलमेवाहुर्ब्राह्मण्यंमुनिपुंगवाः॥साचभस्मधारणाभावेनकेनाप्युपदिश्यते॥२॥

कात्यायनोपि॥ श्राद्धे दाने जपे होमे वैश्वदेवे सुरार्चने॥ धृतत्रिपुंड्रः पूतात्मा मृत्युं जयति मानवः॥ देवीभागवते एकाद
शस्कंधे॥ भस्मदिग्धशरीराय यो ददाति धनं मुदा॥ तस्य सर्वाणि पापानि विनश्यंति न संशयः॥१॥ तथा भवि
ष्यपुराणे॥ सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनं॥ तस्य व्यर्थमिदं सर्वं यस्त्रिपुंड्रं न धारयेत्॥१॥ आयुरादिसा
धनत्वाच्चेदं धार्यं॥ तथा च महाभारते॥ आयुःकामोथवा राजन् भूतिकामोथवा नरः॥ नित्यं वै धारयेद्भस्म मोक्ष
कामी च वै नरः॥१॥ देवीभागवते एकादशस्कंधे॥ एतच्छिरोव्रतं कुर्यात्संध्याकालेषु सादरं॥ यावद्विद्योदयस्ता
वत्तस्य विद्या खलु समा॥१॥ शिरोव्रतमुद्धूलनमिति वदंत्यार्ते॥ अनया विद्यया ब्रह्मविद्येति नीलकंठः॥ महापातका
दिपापनाशहेतुत्वाच्चेदं धार्यं॥ तथा च विष्णुधर्मोत्तरे नारदः॥ भस्मैव परमं पुण्यं ब्रह्मविष्णुशिवात्मकं॥ येन दृष्टेन
पापानि नाशमायांति सर्वथा॥१॥ महाभारते॥ अगम्यागमने राजन् प्रायश्चित्तं विधीयते॥ आर्द्रवस्त्रेण षण्मासा
त्त्रिहार्यं भस्मशायिना॥१॥ एष एव तु सर्वेषां भस्मकार्याणां विधिर्भवेत्॥ वृद्धशातातपः॥ मद्यं पीत्वा गुरुदारांश्च ग
त्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा॥ भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः॥१॥ पापानि कुर्वता
पि पापसंगपरिहाराय भस्म धार्यं॥ न संविशांति पापानि स्थूला[illegible] शिवरहस्यवचनात्॥१॥ देवीभागवते॥ भस्म

णं येषां भस्मधारणपूर्वकं ॥ तेषां तद्भस्मनैव स्यान्मुनेनात्र विचारणा ॥ १ ॥ नित्यत्वाच्च भस्म सदा धार्यं ॥
तथा च तैत्तिरीयकश्रुतिः ॥ भूत्यै न प्रमदितव्यमिति ॥ १ ॥ रावणभाष्ये ॥ भूतिशब्दार्थो भस्मेति स्पष्टमुक्तम् ॥
॥ सूतसंहितायां व्रतदेवोपबृंहितं ॥ तद्यथा ॥ सत्यात्स्वधर्मादपि कुशलोद्भस्मनोद्धूलनादपि ॥ त्रिपुंड्रधारणाच्चै
व सदा न प्रच्युतो न वंदिति ॥ १ ॥ सनत्कुमारसंहितायां तद्द्वैविध्यमुक्तम् ॥ तत्पुनर्द्विविधं प्रोक्तं मुख्यगौणं तथै
व च ॥ मुख्यं प्रोक्तं परं ब्रह्मगौणमाग्नेयमुच्यते ॥ गौणं नानाविधं विद्धि ब्रह्मन्ब्रह्मविदांवर ॥ अग्निहोत्राग्निजं
तद्वद्विरजाहोमजं मुने ॥ औपासनसमुद्भूतं समिदग्निसमुद्भवं ॥ पचनाग्निसमुद्भूतं दावानलसमुद्भवं ॥ एते
षां भस्मभेदानां वर्णभेदेन कल्पयेत्क्रमात् ॥ ब्रह्मक्षत्रियवैश्यानां त्वग्निहोत्रसमुद्भवं ॥ शूद्राणां श्रोत्रिया
गारपचनाग्निसमुद्भवं ॥ १ ॥ अन्येषामनुजानां तु स्मृतं दावानलोद्भवं ॥ आश्रमभेदेनापि व्यवस्था तत्रैव ॥ समि
दग्निसमुद्भूतं धार्यं ब्रह्मचारिभिः ॥ अग्निहोत्रसमुद्भूतं गृहस्थैर्वनवासिभिः ॥ १ ॥ श्रौताग्निरहिता ये च तेषामौ ५
पासनोद्भवं ॥ २ ॥ वायवीये तु ॥ सर्वेषां गोमयजं वापि भस्मोक्तं ॥ तथा हि ॥ श्रीवामेर्भस्मसंग्राह्यमग्निहोत्रोज्ज
वं तु वा ॥ वैवाह्याग्निसमुद्भवं वा विपक्वं शुचिस्मगंधि च ॥ कपिलायाः शकृच्छुक्लं गृहीतं गगने पतत् ॥ न क्लिन्नं ना ॥

तिकृमिनं नदुर्गंधि नचोषितं ॥ २ ॥ उपर्यधः परित्यज्य गृह्णीयात्स्यतितं यदि ॥ पीडीकृत्य शिवाग्नौ तु तत्तु क्षिपेत्
मूलमंत्रतः ॥ ३ ॥ अपक्वमतिपक्वं च संत्याज्य मसितं सितं ॥ आदाय वाससा लोड्य भस्माधारे विनिक्षिपेत् ॥ ४ ॥ भ
स्मसंग्रहणं कुर्याद्देवे नुद्वासिते सति ॥ उद्वासने कृते यस्मात् चंडभस्म प्रजायते ॥ ५ ॥ यद्वा द्विजा भस्म कुर्युः स
द्योनानीय गोमयं ॥ वामेन पात्रे संयोज्य घोरमंत्रेण निर्दहेत् ॥ ६ ॥ पुरुषेण समुद्धृत्य ईशानेन विशोधयेत् ॥ इत्थं
पुसंस्कृतं भस्म अग्निरित्यादिभिर्मंत्रतः ॥ इत्यादि ॥ अस्य शिवाग्नेः सद्भिराद्येनापि व्यवहृतस्य देवीभागवते ए-
कादशस्कंधे दशमेऽध्याये विस्तरेण निरूपणं कृतमिह विस्तरभयान्नोक्तमिति तत एवावधार्यम् ॥ शूद्रहस्ताद्द्विजे
र्भस्म न ग्राह्यं ॥ तदाह नारदः ॥ शूद्रहस्तस्थितं भस्म न हि धार्यं द्विजातिभिः ॥ शूद्रैरंत्यजहस्तस्थं न धार्यं भ-
स्म जातु चित् ॥ १ ॥ धारणे मंत्रानाह पुलस्त्यः ॥ अग्निरित्यादिभिर्मंत्रैः शुद्धं भस्माभिमंत्रितं ॥ शिवमंत्रेण वा धार्यं
मंत्रेणाष्टाक्षरेण वा ॥ गायत्र्या वापि वेदोक्तमंत्रेण प्रणवेन वा ॥ एतेषां कल्पविशेषं स एवाह ॥ करोति शिवमंत्रे
ण यस्त्रिपुंड्रं द्विजोत्तमः ॥ त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते ॥ अष्टाक्षरेण मंत्रेण यः करोति त्रिपुंड्रकं ॥
विष्णोः पदमवाप्नोति गायत्र्या मुनिपुंगव ॥ प्राप्नोति ब्रह्मणो रूपं प्रणवेन न संशयः ॥ अष्टाक्षरमंत्रस्तु ॥ ॐ नमो

शु.

नारायणाय ॥ गायत्र्यपि प्रसिद्धैव ज्ञेया ॥ अथ धारणे वर्णाश्रमभेदेन मंत्रभेदमाह ॥ लैंगे ॥ त्र्यायुषेति मंत्रे त्रि
पुंड्रं ब्रह्मचारिणः ॥ अग्निरित्यादिभिर्मंत्रैः पंचवक्त्रमयेस्तथा ॥ १ ॥ त्र्यंबकेति मंत्रेण तारेण प्रणवेन वा ॥ पंचाक्ष
रेण मंत्रेण प्रणवेनान्वितेन वा ॥ २ ॥ त्रिपुंड्रं धारयेन्नित्यं गृहस्थश्च गृहाश्रमी ॥ प्रणवेनैव संधार्यं संन्यासाश्रमवर्ति
भिः ॥ ३ ॥ नमोंतेन शिवेनैव धार्यं शूद्रैः स्त्रिया तथा ॥ अन्येषामपि सर्वेषां विना मंत्रेण सुव्रत ॥ ४ ॥ भस्मनो धारणं श्रो
क्तं नित्यं शैवागमेषु च ॥ उद्धूलनं त्रिपुंड्रं च धारणं हि द्विविधं मतं ॥ ५ ॥ उद्धूलनत्रिपुंड्रयोः समुच्चयेन धारणं कर्तव्यं ॥
उद्धूलनं त्रिपुंड्रं च नित्यं धार्यं प्रयत्नतः ॥ उद्धूलनं त्रिपुंड्रं च मनसापि न लंघयेत् ॥ ६ ॥ इति केदारखंडे ॥ समुच्चय
विधानात् ॥ विश्वेश्वरसंहितायामपि ॥ तस्मादुद्धूलनं पूर्वं त्रिपुंड्रं धारयेत्परं ॥ ७ ॥ इति समुच्चयो विहितः ॥ उद्धूलनं
द्विविधं ॥ पूजार्थं शुद्ध्यर्थं च ॥ पूजार्थं सजलेन भस्मना कार्यं ॥ शुद्ध्यर्थं तु केवलेन भस्मनैव ॥ पूजाकाले हि सजलं
शुद्ध्यर्थं निर्जलं भवेदिति विश्वेश्वरसंहितावचनात् ॥ दिवा वाथ दिवारात्रौ नारी वाथ नरोऽथवा ॥ पूजार्थं सजलं भस्म
शुद्ध्यर्थं केवलं भवेत् ॥ इति विश्वेश्वरसंहितायां ॥ मध्याह्नादूर्ध्वमपि सजलस्यैव विधानात् ॥ मध्याह्नात्प्राक् जलैर्युक्तं तो
यं तदनुवर्जयेदिति वचनं स्त्रीपरत्वादि विषयं ॥ तदुक्तं स्मृतिसंग्रहे ॥ धार्यं भस्म त्रिसंध्यं तु गृहिणा जलसंयुतं ॥ सर्वकालं भवे

५

स्त्रीणां यतीनां जलवर्जितं ॥ १ ॥ वनस्थव्रतिकन्यानां दीक्षाहीनं नृणां तथा ॥ मध्यान्हात्प्रागजस्रैर्धृतं परतो जलव
र्जितं ॥ इति त्रिपुंड्रं सजलेनैव कार्यं ॥ तदुक्तं तत्रैव ॥ सर्वदा सजलं भस्म त्रिपुंड्रे त्रैवर्णिकः धारयेत् ॥ स्मृतसंहितायां ॥ भस्मना
सजलेनैव धारयेत्तत्त्रिपुंड्रकमिति ॥ तत्रैव ॥ शिवेन विष्णुना चैव ब्रह्मणा वज्रिणा तथा । देवतानि धृतं तस्मात्त्रिपुं
ड्रोद्धूलनात्मना ॥ १ ॥ अमादेव्या ब्रह्मपत्न्या चवा वाचान्याभिरास्त्रिका ॥ सर्वस्त्रीभिर्धृतं भस्म त्रिपुंड्रोद्धूलनात्मना इति ।
। अथोद्धूलनप्रकारो जाबाले ॥ तत्रैते श्लोकाः ॥ प्रयतो भस्म गृहीत्वा स्वयं वा गुरुवरेण वा ॥ न वाङ्गुष्ठकरे दद्यान्नं
वाङ्गुष्ठं जले क्षिपेत् ॥ १ ॥ यावंतः पतिता भूमौ भस्मनः परमाणवः ॥ तावद्वर्षसहस्राणि रौरवं नरकं व्रजेत् ॥ २ ॥ भस्म सा
व्यं तु सावधानो धारयेद्भस्म बुद्धिमान् ॥ आदरेण समादाय भस्म पात्रे निधापयेत् ॥ ३ ॥ उद्धूलयेत्पादादि हस्तौ च यद्दि
राचम्य समाहितः ॥ गृहीत्वा भस्म नो मुष्टिं सद्योजातादिभिर्गृहीत ॥ ४ ॥ आग्नेयाभस्म तत्कृत्वा आत्वाये वसद्रा शिवं
॥ अग्निरित्यादिभिर्मंत्रैस्त्रिवारमभिमंत्रयेत् ॥ ५ ॥ ईशानेन पंचधा भस्म विकिरेन्मूर्ध्नि यत्नतः ॥ मुखे च तत्पुरु
षेणाऽघोरेण हृदि धात्रि ॥ ६ ॥ वामेन गुह्यदेशे तु त्रिदशास्थानके तु ॥ अष्टधा सद्योमंत्रेण पादयुग्ममजलतः ॥
७ ॥ संध्यात्रये निशीथे च तथा पूर्वावसानयोः ॥ सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकं ॥ ८ ॥

॥८॥ स्त्रियं नपुंसकं शूद्रं विडालं बकमूषको॥ स्पृष्ट्वा तथाविधानन्यान्भस्म आस्नानमाचरेत्॥८॥ देवाग्निगुरुवृद्धा
नां समीपे त्यजेद्भुवि॥ अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं क्वचित्॥ योजितं चंदनेनापि वारिणा संयुतं तु वा। चंदनेन समं लिं
पेन्नाथीज स्नानचैव हि॥ मध्याह्नात्प्राक् जलैर्युक्तं तोयं तद्वत्सुवर्जयेत्॥२२॥ इति॥ अथ मूर्ध्नि भस्मधारणविधिः॥ स
तुर्विधः॥ तदुक्तं वायवीयसंहितायां॥ लिंगदीप्यादिवंशेनं बहुरस्वथ वर्तुलं॥ त्रिपुंड्रं चेति कार्यं तत्पट्टविधं शिवशास
नं॥१॥ वर्तुलं ब्रह्मनक्षत्रानां त्राकोणगं चतुरस्रकं॥ वेत्थलिंगं दीपसमं स्यादर्द्धचंद्राभमेव च॥२॥ सद्योविप्रस्य भक्तानां लिं
गं त्रिपुंड्रकं॥ इति क्रियासारे॥ मध्यांगुलित्रयेणैव स्वदक्षिणकरस्य तत्॥ षडंगुलायतं मानमपि वा क्षिकामानगं॥१॥
नेत्रयुगप्रमाणेन भाले कुर्यात्त्रिपुंड्रकं॥ वर्णाभेदेन मानं तु॥ सिद्धान्तशेखरे॥ २॥ षडंगुलायतं विप्रो श्रेष्ठं चतुरंगुलिसं
मितः॥ यथासंभवतः कुर्याद्द्विराकालादपेक्ष्यते॥ ३॥ तत्रैव श्लोकाः॥ त्रिपुंड्रं धारयेन्नित्यं ब्रह्मविष्णुशिवात्मकं
॥ ऊर्ध्वपुंड्रं भवेत्साम मध्यपुंड्रं यजुर्विदुः॥१॥ अधः पुंड्रमृचः साक्षात्तस्मात्पुंड्रं त्रियायुषं॥ आदरेण समादाय भस्म पा ६
त्रे निधाय च॥२॥ प्रक्षाल्य पादौ हस्तौ च द्विराचम्य समाहितः॥ गृहीत्वा भस्म तत्संख्यं ब्रह्ममंत्रैः शनैः करे॥३॥ पंचब्रह्मसमं
त्रैः सद्योजातादयः॥ अग्निरित्यादिभिर्मंत्रैः वह्निर्वेद्याभिमंत्रयेत्॥४॥ ॐमापोज्योतिरित्युक्त्वा ध्यात्वा विष्णुजलाधिपं

संयोज्यवारिणाभस्म मानस्तोकेतिमर्दयेत् ॥५॥ मध्यांगुलिभिरादाय तिसृभिर्मूलमंत्रितं ॥ अनामामध्यमांगुष्ठैरथ
वास्यात्त्रिपुंड्रकं ॥६॥ अकारोनामिकाप्रोक्ताउकारो मध्यमांगुलिः ॥ मकारस्तर्जनी तस्मात्ताभिः कुर्यात्त्रिपुंड्रकं ॥७॥
भ्रुवोर्मध्यात्समारभ्य यावदंतो भवेद्भ्रुवोः ॥ अकारो गार्हपत्योग्निर्भूरात्मा च रजोगुणः ॥८॥ ऋग्वेदश्च क्रियाशक्तिः
प्रातःसवनमेव च ॥ महादेवश्च रेखायाः प्रथमायाश्च देवता ॥९॥ उकारो दक्षिणाग्निश्च अंतरात्मा भुवर्यजुः ॥ सत्वं मा
ध्यंदिनसवनं इच्छाशक्तिस्तथैव च ॥१०॥ महेश्वरश्च रेखायाः द्वितीयायाश्च देवता ॥११॥ मकाराहवनीयोऽथ परमात्मात
मोदिवा ॥ ज्ञानशक्तिः सामवेदस्तृतीयं सवनं तथा ॥१२॥ दिवासहेत्यर्थः ॥ शिवश्चेति तृतीयायाः रेखायास्त्वधिदेवता
एतान्नित्यं नमस्कृत्य त्रिपुंड्रं धारयेच्छुचिः ॥१३॥ स्मरन्नमः शिवायेति ललाटे च त्रिपुंड्रकं ॥ स्वछाभ्यां नमइत्युस्कंधार
येभस्मकोष्ठयोः ॥१४॥ नीमायेतिततः पृष्ठे शिवायजठरे तथा ॥ नीलकंठाय शिरसि क्षिपेत्सर्वात्मनेनमः ॥१५॥ पापं च
नाशायेत्कृत्स्नं अपि जन्मशतार्जितं ॥ कंठोपरि कृतं पापं नष्टं स्यात्तत्र धारणात् ॥१६॥ कर्णे च धारणात्कर्णरोगादि
कृतपातकं ॥ बाह्वोर्बाहुकृतं पापं वक्षसि मनसा कृतं ॥१७॥ नाभ्यां शिश्नकृतं पापं कट्यां गुदकृतं तथा ॥ पार्श्वयोर्धा
रणात्पापं परस्त्र्यालिंगनादिकं ॥१८॥ तद्भस्म धारणं कुर्यात्सर्वत्रैव त्रिपुंड्रकं ॥ ब्रह्मविष्णुमहेशानां त्र्यग्नीनां च धा

भ्रा·सु·

७

रणं॥१९॥ गुणलोकत्रयाणां वधारणं तेन देवेकृतं॥२०॥ इति॥ भस्मोपरि चंदनादिकं धार्यं॥ तदुक्तं कौर्मे॥ वै
दिकैर्मंत्ररहितं चंदनागरुकुंकुमं॥ तिर्यक्पुंड्रात्मना धार्यं कांतिसौख्याभिलाषिभिः॥१॥ पुंड्रोद्धृतश्चंदनाद्यैरिति
भस्म न संत्यजेत्॥ इत्येतन्न भस्मसंत्यागी कृतीत्राक्रोधवन्हितः॥२॥ चंदनाद्युपरि प्राज्ञो धारयेद्भस्म वैदिकं॥ लौकि
कं चंदनाद्यं तु भस्मोपरि न धारयेत्॥३॥ भस्मचंदनादीनां त्र्यंगेन योनविद्यते॥ चंदनादीन्यतो लौकिकान्येवा
त्र न संशयः॥४॥ दृष्टकांत्याद्यर्थं चंदनादेरुपरि भस्मनि॥ इति किंचिच्चंदनादेर्धारणस्य फलं न चेत्॥५॥ उपरिष्टा
च्चंदनादेर्धृते ऽपि सितभस्मनि॥ चंदनाद्युत्थभस्मोक्तफलादेः को निवारकः॥६॥ त्रिपुंड्रधारणं मंत्ररहितं नतु हीन
कार्यं॥ तदुक्तं लिंगे॥ त्रिपुंड्रकं सदा कुर्यान्मंत्रपूतेन भस्मना॥ मंत्रहीनं तु यः कुर्यात्पापभागी भवेन्नरः इति
॥१॥ अत्रेदं बोध्यं॥ एतादृशानि वाक्यानि॥ अमंत्रकधारणनिंदाव्याजेन समंत्रकतद्धारणमतिप्रशस्तमिति बो
धने तात्पर्यवंति॥ न त्वमंत्रकनिंदायामेव तात्पर्यवंतीति भ्रमितव्यं॥ न हि निंदेति न्यायात्॥ सामान्यभस्मधारणवि
धिवाक्यानां संकोचे गौरवात्॥ अत एव छद्मनापि तद्धारणं स्तुतं देवीभागवते॥ नरिच्छद्मनाहि विधिमातिष्ठति॥ ७
परत्वस्य मात्रस्य केवलभस्मनापि संभवेन विधेस्तस्यानपेक्षितत्वादेवमन्यस्मिन्नप्यन्यथाकरणे कुत्स्यं॥ अत ए

वस्त्रपादस्पृष्टभस्मस्पर्शान्मृतस्य गतिर्जाबालेत्यादि पौराणिकं तद्दोषः संगच्छते॥ उद्धूलनेप्यशक्तश्चेत्त्रिपुंड्रा
दीनि धारयेत्॥ इत्यादिना ऽद्धेवं तु कलिकाकारादिकं ग्राह्यम्॥ वेदबाह्यतांत्रिपत्तुरस्ताद्याकार भस्मधारणस्य
पूर्वमुक्तत्वात्॥ ननु॥ एवं श्रुतिस्मृतीतिहासपुराणसिद्धकर्मव्यत्ताकेन भस्मधारणे केषांचिद्द्वेषो दृश्यते॥ तत्र
किं कारणमिति चेत्पूर्वाचरितमहापातकादिसंकीर्णवंशजलक्षणाशरीरार्थि॥ महापापवतां नृणां वेदसिद्धे महेश्वरे॥ त्रिपुंड्रो
द्धूलनादौ विद्वेषः संप्रजायते॥ वासिष्ठलैंगे॥ येषां भस्मानि रुद्राक्षे बिद्वेषो वर्तते हृदि॥ संकीर्णा सा भवेद्धूल
त्तेषां वर्णपरंपरा॥ भस्मोद्धूलनस्यैव त्रिशिरोव्रतमिति नाम्ना पाशुपतव्रतमिति नाम्ना चाथर्वशिरसि व्यवहा
रः॥ तथा च देवीभागवते एकादशस्कंधे॥ सर्वांगोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयमिति॥ शिरोव्रतमिदं
नाम सिरस्याथर्वणश्रुते रिति॥ शाखाभेदेषु नामानि व्रतस्यास्य विभेदतः॥ पठ्यंते मुनिशार्दूल शाखास्वे
कं व्रतं हितदिति च॥ एवमुपक्रम्याति माहात्म्यं चास्य तत्रोक्तं॥ ॥इति श्रीमत्स्वामिसदानंदविरचिते शै
वसुधाकरे भस्मनिरूपणं नाम द्वितीयः किरणः॥२॥ ॥अथ रुद्राक्षमहिमा॥ बृहज्जाबाले॥ अथ
भुसुंडः कालाग्निरुद्रं पप्रच्छ॥ कथं रुद्राक्षोत्पत्तिस्तद्धारणे किं फलमिति॥ स होवाच भगवान्कालाग्निरुद्र

रु. त्रिपुरवधार्थाय सहस्रमीलिताक्षो भवं॥ नेत्रेभ्यो जलबिंदवो भूमौ पतितास्ते रुद्राक्षा जाताः॥ सर्वानुग्रहार्थाय तेषां
नामोच्चारणमात्रेण दशगोदानफलं॥ दर्शनस्पर्शनाभ्यां द्विगुणं फलमत ऊर्ध्वं वक्तुं न शक्नोमि॥ देवीभागव
ते एकादशस्कंधे॥ फलस्य दर्शने पुण्यं स्पर्शात्कोटिगुणं भवेत॥ शतकोटिगुणं पुण्यं धारणाल्लभते नरः॥१॥ ल
८ क्षकोटिसहस्राणि लक्षकोटिशतानि च॥ जपाच्च लभते नित्यं नात्र कार्या विचारणा॥२॥ शिवरहस्ये॥ रुद्राक्षद
र्शनेनापि नश्यत्यघकुलं क्षणात॥ रुद्राक्षमालिकां कृत्वा कुरु रुद्राक्षधारणं॥१॥ रुद्राक्षधारणं कृत्वा भस्म
धारणपूर्वकं॥ स्नानानंतमहापापो ध्यनायासेन मुच्यते॥२॥ वेदस्याध्ययनं कार्यमुपवीतैर्यथा तथा॥ रुद्रा
क्षधारिभिः कार्यं सर्वदा शिवपूजनं॥३॥ विभूतिधारणं कृत्वा कृत्वा रुद्राक्षधारणं॥ यः शिवं पूजयेद्भक्त्या स
मोक्षमधिगच्छति॥४॥ रुद्राक्षाण्युपकम्यवौ धारयन्नपि॥ यस्तानि धारयन् गच्छति तिष्ठन्निमिषन्नपि॥ सर्वाण्ये
नांसि तरति रुद्रो भूत्वा ह्यमृतत्वमेति॥ना निशि॥ स्वादन्मांसं पिबन्मद्यं संगच्छन्नंत्यजादिभिः॥ सद्यो भवति पूतात्मा
रुद्राक्षे शिरसि स्थिते॥१॥ देवीभागवते॥ अनेन भुक्तं देवेन भुक्तं यत्तु तथा भवेत्॥ पीतं रुद्रेण तत्पीतं घ्रातं घ्रातं शि ८
वेन तत्॥ देवीभागवते एकादशस्कंधे॥ रुद्राक्षधारणे लज्जा येषामस्ति महामुने॥ तेषां नास्ति विनिर्मोक्षः संसाराज्जन्म

कोटिभिः ॥१॥ रुद्राक्षधारिणं दृष्ट्वा परिवादं करोति यः ॥ उत्पत्तौ तस्य सांकर्यमस्त्येवेति विनिश्चयः ॥२॥ तथा ॥ रुद्रा
क्षधारिणे भक्त्या वस्त्रं धान्यं ददाति यः ॥ सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति ॥१॥ रुद्राक्षधारिणं श्राद्धे भो
जयेत्तु विमोदतः ॥ पितृलोकमवाप्नोति नात्र कार्या विचारणा ॥२॥ रुद्राक्षधारिणः पादौ प्रक्षाल्याद्भिः पिबेन्नरः ॥
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥३॥ तथा ॥ ब्रह्मस्वेषु च दानेषु रुद्राक्षस्त्वविशिष्यते ॥ शिवभक्ताय
शांताय दद्याद्रुद्राक्षमुत्तमम् ॥४॥ देवीभागवते एकादशस्कंधे ॥ रुद्राक्षाणां तु कृतार्थ वते वै भागवतोत्तमाः ॥ रुद्राक्ष
धारणं कार्यं सर्वैः श्रेयोर्थिभिर्नृभिः ॥१॥ वै भागवतास्तथा वैष्णवश्रेष्ठाः ॥ कर्णपाशे शिखायां च कंठे हस्ते त
थोदरे ॥ महादेवस्य विष्णोश्च ब्रह्मणस्तेषां विभूतयः ॥२॥ देवाश्चान्ये तथा भक्त्या रक्षंतु रुद्राक्षधारिणः ॥३॥ तथा ॥
शिरसा धारिते कोटिः कर्णयोर्दश कोटयः ॥ शतकोटिर्गले बद्धा मूर्ध्नि कोटिसहस्रकं ॥१॥ अयुतं चोपवीते तु
लक्षकोटिर्भुजे स्थिते ॥ मणिबंधे तु रुद्राक्षो मोक्षसाधनकः परः ॥२॥ रुद्राक्षधारको भूत्वा यत्किंचित्कर्म वैदिकं
॥ कुर्वन्विप्रः सदा भजन् महदाप्नोति तत्फलं ॥३॥ तथा च ॥ स्कंदे ॥ संपूज्यते नित्यं रुद्राक्षः शंकरात्मकः ॥ दरिद्रं वा
पि कुर्वंति राजानं कुरुते तु सः ॥१॥ तत्पूजनं प्रयत्नेन षोडशाद्यैस्तु तन्मूलैर्वोपचारैर्यथाधिकारं सपत्नवनाश

रु॰

धारणेन वा शैवपञ्चाक्षरेण कार्यम्॥ स्कांदे॥ स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने॥ प्रायश्चित्ते तथा श्राद्धे दीक्षा
काले विशेषतः॥ अरुद्राक्षधरो भूत्वा यत्किंचित्कर्म वैदिकं॥ कुर्याद्विप्रस्तु मोहेन न तस्याप्नोति तत्फलं॥२॥ ब्र
१ ह्मोत्तरखंडे॥ रुद्राक्षं मस्तके बद्ध्वा शिरःस्नानं करोति यः॥ गंगास्नानफलं तस्य जायते नात्र संशयः॥१॥ बृहज्जाबाले
॥धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतं॥ बदरीफलमात्रं च मध्यमं प्रोच्यते बुधैः॥२॥ अधमं चणकाकारं प्रक्रिये
षा मयोच्यते इत्यादि॥ रहस्यार्णवे॥ रुद्राक्षाणां फलं ग्राह्यं देवि सर्षपमात्रकं॥ सर्षपादधिका ग्राह्या आर्द्रधात्रीफ
लावधि॥१॥ तदर्द्धं क्षत्रियैर्ग्राह्यं वैश्यैर्ग्राह्यं तदर्द्धकं॥ तदर्द्धं संकरैर्ग्राह्यमेवं रुद्राक्षलक्षणं॥२॥ ब्राह्मणो बिभृ
याच्छ्वेतान् रक्तान् राजा तु धारयेत्॥ पीतान् वैश्यस्तु बिभृयात् कृष्णान् शूद्रस्तु धारयेत्॥३॥ स्वयमेव कृतद्वारं य
त्स्यादिति चोत्तमं॥ यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत्॥४॥ समान् स्निग्धान् दृढान् स्थूलान् कंटकैः संयुता
न् शुभान्॥ दृष्टान् क्षौमसूत्रेण धारयेत्सर्वदा नरः॥५॥ निघर्षे हेमरेखाभा यस्य रेखा प्रदृश्यते॥ तदक्षमुत्तमं विद्या
त्तद्धार्यं शिवपूजकैः॥६॥ यत्तु॥ नाक्तं विधारयेदक्षमालां भक्त्यैव धारयेद्दिवादि पर्यालोचनया॥ धारयेत्॥ सर्वदा न ९
र इति वचनं मूत्रपुरीषोत्सर्गातिरिक्तकाले धारणविधायकमिति केचिदाहुः॥ तन्न॥ सर्वदापदस्य संकोचे मानाभा

वात॥ नाशुचिर्धारयेदित्यस्य जपमालामात्रकरणपठितत्वात्॥ पुरीषोत्सर्गयोः॥ साक्षात्कारणविधायकवचन
सद्भावाच्च॥ तदाह वासिष्ठलैंगे॥ जिघ्रन्नपि तथाश्नन्वदन्नपि संततं॥ कुर्वन्नपि यथा गच्छन्विसृजन्नपि मा
नवः॥१॥ रुद्राक्षधारणादेव सर्वैः पापैर्न लिप्यते॥२॥ विसृजन्मूत्रपुरीषं त्यजन्नित्यर्थः॥ शुचिर्वाप्यशुचिर्वा-
पि सर्वावस्थां गतोपि वा॥३॥ इत्यादिलैंगवचनात् संज्ञापितं त्रैवोक्तं॥ शिरस्यामकरुद्राक्षं त्रिशतं शिरसा वहेत्॥
षट्त्रिंशतं गले दध्यात् बाह्वोः षोडश षोडश॥१॥ द्वादशं मणिबंधे पि स्कंधे पंचशतं वहेत्॥ अष्टोत्तरशतैर्माला
मुपवीतं प्रकल्पयेत्॥१॥ अस्मिन्पक्षे पंचदश कर्णे चत्वारि वामकर्णे इति शिष्टसमाचाराज्ज्ञेयं॥ द्विसरं त्रिसरं वा
पि सराणां पंचकं तु वा॥ सराणां सप्तकं वापि बिभृयात्कंठदेशतः॥५॥ त्रिशतं त्वधमं पंचशतं मध्यमुच्यते॥ सहस्र
मुत्तमं प्रोक्तमेवं भेदेन धारयेत्॥२॥ इदं च धारणं विनिगमनाभावाद्यथा स्यात्तथैव॥ ब्रह्मोत्तरखंडे॥ सहस्रं धारयेद्य-
स्तु रुद्राक्षान्वै धृतव्रतः॥ तं नमंति सुराः सर्वे यथा रुद्रस्तथैव सः॥१॥ अभावे तु सहस्रस्य बाह्वोः षोडश षोडश॥ एकं शिखा
यां करयोर्द्वादश द्वादशैव हि॥२॥ द्वात्रिंशत्कंठदेशे तु चत्वारिंशच्च मस्तके॥ प्रत्येकं कर्णयोः षट्षट् वक्षस्यष्टोत्तरं
शतं॥३॥ यो धारयति रुद्राक्षान् रुद्रवत्सोपि पूज्यते॥ देवीभागवते एकादशस्कंधे॥ रुद्राक्षं यच्छिखायां ततारत्व-

मितिस्मरेत्॥कर्णयोस्तनयोर्ब्रह्म [illegible] वं देवी ब्रह्माक्षिति॥ ॥ यज्ञोपवीते वै [illegible] सथा हस्ते दिशः स्मरेत्॥ मुक्ताप्रवाल
स्फटिकवैडुर्यरत्नकांचनैः॥ [illegible] रुद्राक्षान्स शिवो भवेत्॥ केवलान्वापि रुद्राक्षानन्यथा [illegible]
बिभर्ति यः॥३॥ यस्यांगे नापि रुद्राक्षः एकोपि बहुपुण्यदः॥ तस्य जन्म निरर्थं स्यात् त्रिपुंड्ररहितं यथा॥४॥ स्कांदे॥
१० ॐकारमाहात्म्ये॥ रुद्राक्षाणां सहस्रं हि मुमुक्षुर्धारयेत्सदा॥ तदभावे शतं वापि दशैकं वा यथाविधि॥१॥ शंकरसंहिता
यां॥ धर्तव्यमेतत्सूत्रेण सौवर्णेनाथवा द्विजाः॥ तस्मात्सर्वप्रयत्नेन भस्मरुद्राक्षभूषणः॥१॥ नबिभ्रति [illegible]
न्निर्णय एव सः॥ रुद्रस्याक्षतया विप्रा रुद्राक्षा इति कीर्तिताः॥२॥ रुद्राक्षधारके [illegible] परिपूर्णकटाक्षवान्॥ रुद्राक्षधार
काः सर्वे रुद्राकाराः प्रकीर्तिताः॥३॥ ज्ञात्वा ये [illegible] परसमं स्वर्गापवर्गप्रदं रुद्राक्षं विधिनामुना निजतनौ सम्य
क्सदा बिभ्रति॥ तेषां दग्धनिजेन [illegible] फलं जानाति को वा सुधीस्त्यक्त्वा शंकरमेव विघ्नगणपतिं [illegible]
॥ धारणे मंत्राः प्रोक्ता बृहज्जाबाले॥ सद्योजातेन मंत्रेण शिरसि वामदेवेन कर्णयोः॥ अघोरेण [illegible] तत्पुरुषेण [illegible]॥२
॥ ईशानाख्येन मंत्रेण करयोः [illegible]॥ ब्रह्मचारिगृहस्थानां वनस्थानां तथैव च॥ रुद्राक्षधारणे मंत्राः प्रोक्ता वै
विप्रत्रयेति ना॥ प्रणवेनैव संधार्यो यतिभिः सर्वसिद्धये॥३॥ द्विजानां मंत्रतः प्रोक्तमन्येषां मंत्रवर्जितं॥ शिवरहस्ये॥ ॥ १०

एकवक्त्रः शिवः साक्षाद्ब्रह्महत्यां व्यपोहति ॥ अवध्यत्वं प्रतिष्ठां च वह्निस्तंभं करोति च ॥१॥ द्विवक्त्रो हरगौरी स्यात् गोव
धाद्यघनाशकृत् ॥ त्रिवक्त्रो ह्यग्निजन्माद्यपातकराशिं प्रणाशयेत् ॥२॥ चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति ॥ पंचव
क्त्रस्तु कालाग्निरगम्याभक्ष्यपापनुत् ॥३॥ षड्वक्त्रस्तु गुहो ज्ञेयो भ्रूणहत्यादिनाशयेत् ॥ सप्तवक्त्रस्त्वनंतः स्यात्स्वर्णस्ते
यादिपापहृत् ॥४॥ विनायकोऽष्टवक्त्रः स्यात्सर्वानृतविनाशकृत् ॥ भैरवो नववक्त्रस्तु शिवसायुज्यकारकः ॥५॥ द
शवक्त्रः स्मृतो विष्णुर्भूतप्रेतभयापहः ॥ एकादशमुखो रुद्रो नानायज्ञफलप्रदः ॥६॥ द्वादशास्यस्तथादित्यः सर्वरोगनि
बर्हणः ॥ त्रयोदशमुखः कामः सर्वकामफलप्रदः ॥७॥ चतुर्दशास्यः श्रीकंठो वंशोद्धारकरः परः इति ॥ केदारखंडे
तु ॥ एकमुखादारभ्य षोडशमुखपर्यंतं रुद्राक्षाः संति तेषु एकमुखपंचमुखावतिश्रेष्ठाविति चोक्तं ॥ तथाहि ॥ आर
भ्यैकमुखं तावत्तावत् वक्त्राणि षोडश ॥ एतेषां द्वौ च विज्ञेयौ श्रेष्ठौ धारयितां नरैः ॥१॥ रुद्राक्षाणां पंचमुखस्तथैवैकमु
खः स्मृतः ॥ ये धारयंत्येकमुखं रुद्राक्षं नित्यमेव हि ॥२॥ जीवन्मुक्तास्तु विज्ञेया नरास्ते नात्र संशयः ॥ एकवक्त्रः शिवः
साक्षात् ब्रह्महत्यां व्यपोहति ॥१॥ ये रुद्राक्षं पंचमुखं धारयंत्यनिशं नराः ॥ रुद्रलोकं व्रजंत्येते भोगान् रुद्रेण भुंजते
॥२॥ इति ॥ पंचामृतं पंचगव्यं स्नानकाले प्रयोजयेत् ॥ रुद्राक्षस्य प्रतिष्ठायां मंत्रं पंचाक्षरं तथा ॥१॥ त्र्यंबकादिकमं

रु॰ त्रं च तथा तत्र प्रयोजयेत्॥ यद्वा॥ ॐ अघोरे ॐ ह्रीं अघोरतरे ॐ ह्रौं ह्रां नमस्ते रुद्ररूपे हुं स्वाहा॥ अनेनाभिमंत्र्य
धारयेत्॥ २॥ अथ मालाप्रकारो रुद्रयामले॥ त्रिंशद्भिः कृता माला धनदा जपकर्मणि॥ सप्तविंशति संख्या
११ तैरक्षैः पुष्टिप्रदा भवेत्॥ १॥ पंचविंशति संख्यातैः कृता मुक्तिप्रदा भवेत्॥ अक्षैस्तु पंचदशभिरभिचारफल
प्रदा॥ २॥ स्कांदे पि॥ अष्टोत्तरशतेनापि माला सर्वार्थसाधिका॥ रुद्राक्षमूलं तु ब्रह्मा तन्नालं विष्णुरुच्यते॥ १॥
तन्मुखं रुद्र इत्याहुर्बिंदवः सर्वदेवताः॥ अक्षसूत्रं प्रकर्तव्यं गोपुच्छवल्लयाकृति॥ २॥ वक्त्रं वक्त्रेण संयोज्य
पुच्छं पुच्छेन योजयेत्॥ मेरुमूर्ध्वमुखं कुर्यात्तदूर्ध्वं नागपाशकं॥ ३॥ प्रक्षाल्य गंधतोयेन पंचगव्येन चोपरि॥ ततः
शिवांभसा क्षाल्य मूलमंत्रं ततो न्यसेत्॥ ४॥ पश्चात्संपूजयेत्तां हि गंधपुष्पाक्षतादिभिः॥ मूलमंत्रं समुच्चार्य
शुद्धभूमौ निधाय च॥ ५॥ पूजयेन्मूलमंत्रेण तस्यां देवं सदाश्रया॥ रुद्राक्षमालयैवं हि जपयोग्या ततो भवेत्॥ ६
॥ नाच्छिद्रं धारयेदक्षमालां नक्तैव धारयेत्॥ अक्षमाला पुण्यत्वाज्जपकाले सुमेधसा॥ ७॥ परदृष्टिगता माला-
निष्फला जपकर्मणि॥ जपकाले क्षमालां तु गुरोरपि न दर्शयेत्॥ ८॥ वर्ज्या नाह स्कांदे॥ कृमिदष्टं छिन्नभि-
न्नं कंटके हीनमेव च॥ व्रणयुक्तमवृत्तं च यत्षट् रुद्राक्षाणि वर्जयेत्॥ अत्रेदं बोध्यं यानि चत्वारि समंत्रक रुद्रा ११

क्षधारणनिषेधकानि॥ तानिमन्त्रिनिंदाइतिन्यायेनसमंत्रकधारणे अत्युत्कर्षबोधनपराणिनतु अमंत्रक
धारणनिंदापराणीतिमंतव्यं॥ मंत्रानुपादानेनरुद्राक्षधारणेबहुवचनेषुफलातिशयदर्शनात्॥ तथाच
॥ देवीभागवतेएकादशस्कंधे॥ रुद्राक्षंकेवलंवापियत्रकुत्रमहामते॥ समंत्रकंवामंत्रेणरहितंभाववर्जितं॥ १
॥ योवाकोवानरोलज्जाधारयेद्भक्तियापिवा॥ सर्वपापविनिर्मुक्तःसम्यक्ज्ञानमवाप्नुयात्॥ एतेनशिरःकर्णा
द्यंगनियमोपिव्याख्यातः॥ यत्रकुत्रेत्यभिधानात्॥ एवंकालमद्यपादिवर्जनविषयेपिव्याख्यातव्यं॥ भूमिस्थरु
द्राक्षखंडेमृतस्यश्वानस्योर्द्ध्वगतिरभूदितिपौराणिकोद्घोषात्॥ २॥ ॥ इतिश्रीमत्स्वामिसदानंदविरचिते
शैवसुधाकरेरुद्राक्षोत्कर्षनिरूपणंनामतृतीयःकिरणः॥ ३॥ ननुमहाभारते॥ जान्हवीतीरसंभूतांमृदंमूर्ध्नि
बिभर्तियः॥ बिभर्तिरूपंसोर्कस्यतमोनाशायकेवलं॥ १॥ सत्यमुक्तं॥ ऊर्ध्वपुंड्रंमृदाशुभ्रंललाटेयस्यदृश्यते॥
सचंडालोपिशुद्धात्मापूज्यएवनसंशयइत्यादिवचनैर्मृदोर्ध्वपुंड्रमपिविधीयते॥ तत्कथंभस्मरुद्राक्षमात्रधा
रणमेवकर्तव्यतयाप्रतिपाद्यतइतिचेदित्थं॥ तत्रतावच्छ्रुतिविहितत्वाभावनिश्चयेऊर्ध्वपुंड्रादिकंमृद्विषयं
॥ अश्रौतमूर्ध्वपुंड्रादिललाटेअह्न्यातुये॥ धारयिष्यंतिमोहेनयुगांतेसमुपस्थिते॥ इतिवासिष्ठलैंगेनवमाध्या

श्रु. ये।। अश्रौतमिति विशेषितत्वेन तस्याश्रौतत्वात्।। तर्हि श्रुतिषु विधानाभावादेकादशीव्रतस्यापि द्विजेतरविषयत्वमि
ति चेन्न।। व्रत्यसूत्रस्य तावेप्यनुमितश्रुतेस्तत्र सद्भावात्।। तर्ह्यनुमितश्रुतिसद्भाव ऊर्ध्वपुंड्रेप्यस्त्विति चेन्न।। ए
१२ कादशीव्रतस्य कुत्राप्यनिषिद्धत्वादनुमितश्रुतेः संभवात्।। ऊर्ध्वपुंड्रस्य तु पुराणेषु बहुशो निषेधादनुमितश्रु
तिसद्भावस्य कल्पयितुमशक्यत्वात्।। तथाहि पाराशरे।। साकनं पुंड्रांतरं निराक्रियते।। ऊर्ध्वपुंड्रं त्रिसूलं च व
र्तुलं चतुरस्रकं।। अर्धचंद्रादिकं लिंगं वेदनिष्ठो न धारयेत्।। जन्मनो लब्धजातिस्तु वेदपंथानमाश्रितः।। पुंड्रांत
रं भ्रमाद्वापि ललाटे नैव धारयेत।। तिर्यक्त्रिपुंड्रं संत्यज्य श्रौतं पुंड्रांतरं भ्रमात्।। ललाटे धारयन्मर्त्यः पतत्येव
न संशयः।। न दाहयेद्द्विजश्रेष्ठ न दह्ने तु कपत्ववैर्कैः।। अंकितो यः स्वदेहेषु तराजाश्री [illegible] वासयेत।। अतीव पति
तानां हि अपवाद्यकर्मणां।। विधीयते न शूद्राणामतः शूद्रं न पाकयेत।।१।। अपवादसंबंध्यंकनमित्यर्थः।।
अध्यापने चाध्ययने श्रौतस्मार्तेषु कर्मसु।। संभाषणे च संबंधे नाधिकारी बलोच्छितः।।२।। ननु तप्तमुद्रादिधारणस्य श्रौ १२
तत्वात्तन्निंदामसंगच्छते।। तथाहि।। यो ह वै श्लोकमोलेधर्माननुतिष्ठतातो।। मत्कं धत्तेग्निवैसहस्रारः सहस्रारो भेदिनेविनातत

तनूः॥सायुज्यंलोकतामाप्नोतीति॥तथा॥ चक्रंबिभर्त्तिवपुषाभितप्तंबलंदेवानाममृतस्यविष्णोः॥सएतिनाकंदुरितं
विधूय॥विशंतियद्यतयोवीतरागाः॥तथाचऋक्परिशिष्टे॥अतप्ततनूर्नतदामोअश्नुतेश्रृतासइद्वहंतस्तत्समास
ता॥इतिचेच्छृणु॥तत्रयोहवैइतिवचनं॥शतपथश्रुतिस्थमिति॥रामार्चनचंद्रिकाकारादिभिरुक्तं॥नचतच्छतपथब्रा
ह्मणेउपलभ्यते॥किंच॥नेहविधिःश्रूयते॥अपिच॥पतितादिविषयकमेव॥प्रागुदाहृतस्मृतिबलात्॥नचस्मृत्या
श्रुतेः॥संकोचोऽनुपपन्नइतिवाच्यं॥विशेषविषयिण्यास्मृत्यासामान्यश्रुतेः॥संकोचस्यसर्वसंमतत्वात्॥अन्य
थापतितस्याप्यग्निहोत्रप्रसंगात्॥कलावपिनरमेधाश्वमेधादेःप्रसंगाच्च॥तत्रयदिपतितानांकर्मानधिकारबोधक
स्मृत्यानरमेधाश्वमेधकावितिकलिनिषिद्धपरिगणनस्मृत्याच॥अग्निहोत्राश्वमेधादिश्रुतीनांसंकोचइतिब्रूषे॥तर्हि
प्रकृतेपितुल्यं॥एतेनचक्रंबिभर्त्तीत्यादिवचनमपिगतार्थं॥यदप्युक्तं॥ऋक्परिशिष्टमितितत्रनेदंपरिशिष्टं॥किंतुस
प्तमाष्टकेपठ्यते॥इतिता॥अतवैदिकेन्योगृह्णाणे॥किंचनास्यत्वदभिमतोर्थः॥संभवति॥इदंत्वदुपजीव्येमोक्षेरित्थं
व्याख्यातं॥पवित्रंतेविततंब्रह्मणस्पते॥प्रभुर्गात्राणिपर्येषिविश्वतः॥अतप्ततनूर्नेतिऋङ्मंत्रः॥ब्रह्मणःवेदस्यच
तुमुखस्यब्राह्मणजातेर्वापतेःरक्षकेतिविभुसंबोधनंप्रभुस्त्वंविश्वतोविश्वेषांगात्राणिपर्येषि॥अंतर्यामितयाव्या

श्रेणि ॥ तद्दृशास्य ते तत्पवित्रं सुदर्शनं ॥ अर्थाच्छ्रुतेनेति लभ्यते ॥ अतप्ततनूः असंस्कृतशरीरः आमः अदग्धपापस्तद्ब्रह्म
नाश्नुते ॥ न चैतद्व्याख्यानं अप्रामाणिकं ॥ तस्मिन्नुदीचीनदर्शने पवित्रं विततं इति पवित्रं ते विततं ब्रह्मणस्पत इति विततम्
मानमस्मिं मंत्रयते यजमान इत्यापस्तंबसूत्रेण उद्गातृभिर्द्रोणकलशे विततमानस्य पवित्रस्यानुमंत्रणे एतन्मंत्रेण एत
न्मंत्रविनियोगात् ॥ तथा च ॥ हे ब्रह्मणस्पते सोम ते तुभ्यं त्वत्पावनार्थं ॥ इदं दशापवित्रं विततं इत्यर्थो भाष्यसंमतः ॥ अत एव
कृच्छ्रचान्द्रायणादिना ऽतप्ततनुरसंतापितदेहः अत एव आमोऽपक्वोऽदग्धरागादिस्तद्ब्रह्म नाश्नुते नाप्नोतीत्यर्थः ॥
अपि च ॥ सोमस्य धाराः पवते इत्यृक्साम ॥ शौचं नो ॥ अस्य जंतवः इत्यक्षरदर्शनात् ॥ पवमानसोमो देवतेत्यनुक्र
मणिकावचनात् ॥ पूर्वोक्तापस्तंबसूत्राच्च तत्व उक्तोऽर्थोऽसंगत एव ॥ यदप्युक्तं बिभ्रुच्चंद्रोदये ॥ नारायणायुधैर्युक्तं
कृत्वात्मानं कलौ युगे ॥ कुरुते युग्मकर्माणि मेरुतुल्यान्यसंशयं इत्यादि ब्रह्मपुराणवचनानीति ॥ तान्यपि समूल
त्वे सर्ववेददृढद्विजेतरविषयव्यवस्थापनेन गतार्थानि ॥ उक्तं च ब्रह्मपुराणे दशमाध्याये ॥ तप्तमुद्रांकितं ब्रह्म जायद्धरि
णा निर्मिता पुरा ॥ भूदेवस्तप्तमुद्राया अचिन्हं कृत्वा विमूढधीः ॥ इह जन्मनि शूद्रः स्यात् प्रेत्य श्वा च भविष्यति ॥ इति स्थि
तम् ॥ नारदीये ॥ संतप्तशंखचक्राद्यैर्लिंगैरंकितविग्रहं ॥ परूपत्तो नरकप्राप्तिर्जायते नात्र संशयः ॥ १ ॥ यस्तु संत

तप्तशंखादिलिंगांकिततनुर्नरः ॥ स सर्वयातनाभोगी चांडालो जन्मकोटिषु ॥ २ ॥ द्विजं संतप्तशंखादिलिंगांकिततनुं नरः ॥ सं
भाष्य रौरवं याति यावदिंद्राश्चतुर्दश ॥ ३ ॥ चक्रांकिततनुर्यत्र यत्र कोपि मृतं विशेत् ॥ यदि तिष्ठेन्महापापी सहस्रं ब्रह्महा भवेत् ॥ ४ ॥ ग ग
स्नानरतो वापि कृच्छ्रमेधरतोपि वा ॥ चक्रांकिततनुं दृष्ट्वा रौरवं गच्छते ॥ ५ ॥ लिंगांकिततनुं दृष्ट्वा पश्येत्सूर्यं नर
श्वर ॥ ६ ॥ हेमाद्रौ प्रायश्चित्तखंडे वायुपुराणे ॥ ब्राह्मणो यदि मोहेन तापयेद्वह्निमुद्रया ॥ स कर्महीनो वेदत्र सर्वे पाखं
डसंज्ञकः ॥ १ ॥ लिंगपुराणे ॥ शंखचक्रांकितापि येनायस्य देहः प्रदह्यते ॥ स जीवन्कुणपस्त्याज्यः सर्वधर्मबहिष्कृतः ॥ आदित्य
पुराणे ॥ पूर्वजस्य तनुं दग्ध्वा शंखचक्रादिभिः पृथक् ॥ न तस्य निष्कृतिर्दृष्टा स्नानदानजपादिभिः ॥ २ ॥ पृथ्वीचंद्रोदयादिनि
बंधेषु विष्णुः ॥ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा ॥ एकजातेरयं धर्मो जातु स्याद्धि जन्मनः ॥ १ ॥ इत्यादिशास्त्रांतरपहा
रीतवाक्यानि द्रष्टव्यानि ॥ स्मृतिसंहितायामपि ॥ वेदमार्गैकनिष्ठस्तु मोहेनाप्यंकितो यदि ॥ पतत्येव न संदेहस्तस्मात्पुंड्रांतरा
दपि ॥ १ ॥ नांकनं विप्रदेहे कुर्याद्वेदपंथानमाश्रितः ॥ लांछितास्तु न संभाष्या न स्प्रष्टव्याश्च कदाचन ॥ २ ॥ न दग्धो नीयास्ता
न्राजा देशाद्दीर्घं प्रवासयेत् ॥ ३ ॥ अस्तु ॥ नानादेशसमुत्पन्ना ब्राह्मणाः क्षत्रिया विशः ॥ चक्रांकिताः प्रवेष्टव्या यावदागम
नाम्नमेति वचनमुदाहरंति ॥ तस्य विनापि वं समुच्चयस्य त्रिपुतेषामपि वक्तव्यत्वेन चक्रांकिता इत्यस्य पूर्ववर्तितयवि।

शैवत्वाभावे विसमुच्चयसंभवेन रुद्राक्षादिविषयत्वमुचितमेव ॥ किंच ॥ तत्र चक्रदग्धादूक्तिपदाभावादिदं राजकीय
चिह्नरूपं किंचित्स्यादिति भाति ॥ तस्मादूर्ध्वपुंड्रमंकनं च सति समूलत्वे द्विजेतरविषयमेव ॥ एवं रुद्राक्षातिरिक्तफल

काष्ठादिमालाधारणमपि बोध्यम् ॥ मुक्ताप्रवालादेर्धारणेच्छायां तु रुद्राक्षान्वितमेव बिभृयात् ॥ मानं तूक्तं प्रागिति
संक्षेपः ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे ऊर्ध्वपुंड्रादिखंडनं नाम चतुर्थः किरणः ॥ ४ ॥ अथ शिव
लिङ्गपूजनमाहात्म्यं ॥ विद्येश्वरसंहितायां ॥ बेरमात्रे तु सर्वत्र पूज्यते देवतागणः ॥ लिंगे चैव हि सर्वत्र कथं संपूज्यते शि
वः ॥ १ ॥ इत्थं शौनकादिभिः पृष्टे सूत उवाच ॥ शिवो हि द्विविधः प्रोक्तो निष्कलः सकलस्तथा ॥ निष्कलत्वान्निराका
रं लिंगं तस्यैव संगतं ॥ २ ॥ सकलत्वात्तथा बेरं साकारं तस्य संगतं ॥ अतुल्यत्वाच्च जीवत्वात्तथान्ये देवतागणाः ॥ ३ ॥ सर्वे सक
लमात्रत्वादर्च्यंते बेरमात्रके ॥ शिवस्योभयरूपत्वाल्लिंगे बेरे च पूज्यते ॥ ४ ॥ बेरं प्रतिमा ॥ तत्रैव वसिष्ठेनोक्तं ॥ लिं
गे बेरे च मे तुल्ये भजतां लिंगमुत्तमं ॥ तस्माल्लिंगं परं पूज्यं बेरादपि मुमुक्षुभिः ॥ १ ॥ महाभारते द्रोणपर्वणि अश्व
त्थामानं प्रति व्यासेनोक्तं ॥ देवदेवस्त्वमेयात्मा अजेयो विष्णुरव्ययः सर्वरूपं भवं ज्ञात्वा लिंगे ऽर्चयति तं प्रभुः ॥ १ ॥ 
तत्रैव कृष्णार्जुनगौरवकथने ॥ जन्मकर्मतपोयोगास्तयोस्तस्य च पुष्कलाः ॥ आभ्यां लिंगेऽर्चितो देवस्त्वयार्चायां यु

गेयुगे ॥ २ ॥ शिवरहस्ये ॥ इति मायां प्रयत्नेन कृतया सांगपूजया ॥ यत्फलं तत्फलं प्राप्यं व्यंगया लिंगपूजया ॥ १ ॥ पुति
माचांय धात्रा स्नुसांगं शंकरपूजनं ॥ कर्तुं न शक्यते यस्माल्लिंगपूज्यं प्रयत्नतः ॥ २ ॥ स्कांदे ॥ यो वा यामर्चयेद्भक्त्या पूर्णं
वर्षशतं नरः ॥ लिंगमेकदिनं पूज्य समं तत्फलं संशयः ॥ २ ॥ तत्रैव ब्राह्मे लिंगं समभ्यर्च्य पुरुषार्थचतुष्टयं ॥ प्राप्नोत्यत्र पु
मास्संघेनात्र कार्या विचारणा ॥ २ ॥ वायु० ॥ अयमेव परो धर्मस्त्विदमेव परं तपः ॥ इदमेव परं ज्ञानं शिवलिंगं यदर्च्यते ॥ १ ॥ थै
लिंगं सकृदप्यत्र पूजितं पार्वतीपतेः ॥ कुतो जन्मभयं तेषां संसारे दुःखसागरे ॥ २ ॥ सौरपुराणे विद्ध्युवति शिववाक्यं ॥ लिं
गमां पूजयद्धरे लिंगरूपधरो ह्यहं ॥ १ ॥ वासिष्ठलैंगे ॥ अस्मातरसहस्रेषु यज्ञदानादिभिर्द्विजाः ॥ नराणां क्षीणपापानां म्र
द्धालिंगार्चने भवेत् ॥ १ ॥ यज्ञास्तथा सिद्दाना नतीर्थसेवा जपोत्सवं ॥ सर्वलिंगार्चनाद्धीनं फलाय न भवेद्द्विजाः ॥ २ ॥ सर्वेषा
मेव धर्माणां मल्लिंगाराधनं वरं ॥ क्रीडंति शिवा यदेवात्र लिंगं कृत्वा व्रजंति ये ॥ सैकतं मृन्मयं वापि तेमवं स्येवन्न मुजः ॥ ३ ॥ शि
वरहस्ये ॥ विना लिंगार्चनं यस्य कालो गच्छति नित्यशः ॥ महाहानिर्भवेत्तस्य दुर्हृतस्य दुरात्मनः ॥ १ ॥ एकतः सर्वदाना नि
व्रतानि विविधानि च ॥ तीर्थानि नियमा यज्ञा लिंगार्चा चैकतः स्मृता ॥ २ ॥ कलौ लिंगार्चनं श्रेष्ठं यथा लोके प्रदृश्यते ॥ त
था नास्तीति भास्त्यत्र शास्त्राणामेष निर्णयः ॥ ३ ॥ काशीखंडे ॥ लिंगार्चनविधानज्ञो लिंगार्चनरतः सदा ॥ त्यक्तएवस

सु·

विज्ञेयः साक्षाद्ब्रह्मा विमानवः ॥१॥ त्रिवर्षस्य ॥ गर्भधारणजः क्लेशस्तस्मात्तु सफलः स्मृतः ॥ यद्गर्भान्निसृतः पुत्रो लिं
गार्चनरतो भवेत् ॥२॥ लिंगस्यार्चनमेवैकं कलौ सारतरं सुराः ॥ तदेव घोरसंसारमहासागरतारकं ॥३॥ इंद्रनीलमयं लिं
गं विष्णुः पूजयते सदा ॥ इत्यादिवचनैर्ब्रह्मादयोऽपि लिंगाराधनं नियमेनैव क्रियते ॥ किमुतान्येषां जीवानां ॥ तथा खलु रा
१५ मेश्वरो ब्रह्मेश्वरो ॥ व्यासेश्वरो बिल्वकेश्वरो ॥ वसिष्ठेश्वरोऽगस्त्येश्वर इत्यादीनि लिंगानि पृथिव्यां तैस्तैर्महापुरुषैः प्रति
ष्ठितान्यर्चितानि च ॥ तत्तन्नामग्रहणेन दृश्यंते ॥ तत्संबद्धकथाप्युपाख्यानानि च तत्र तत्र श्रूयंते ॥ ततो लिंगाराधनमेव प्रति
नापेक्षया श्रेष्ठमिति सिद्धं ॥ लिंगाभावे तु प्रतिमायां शिवपूजनं कार्यं ॥ तदुक्तं विद्येश्वरसंहितायां ॥ लिंगं प्राधान्यतः पू
ज्यं तथा बेरं च गौणकं ॥ लिंगाभावे तु बेरं स्यात् पूजायां स्थापने मम इति ॥१॥ लिंगान्युक्तानि शैवागमे ॥ पद्मरागकाश्मी
रपुष्परागेंद्रनीलगोमेदविद्रुममौक्तिकराजतसौवर्णहारकूटपारदबाणजस्फाटिकानि पार्थिवमुत्तरोत्तरोत्तममिति ॥
वर्णादिभेदेन लिंगभेदनाह ॥ विद्येश्वरसंहितायां ॥ रसलिंगं ब्राह्मणानां सर्वाभीष्टप्रदं भवेत् ॥ बाणलिंगं क्षत्रियाणां म
हाराज्यप्रदं शुभं ॥१॥ स्वर्णलिंगं तु वैश्यानां महाधनपतित्वदं ॥ शिलालिंगं तु शूद्राणां महाशुद्धिकरं शुभं ॥२॥ स्वीया १५
भावे स्वीयं तु पूजायां न निषिध्यते ॥ स्त्रीणां तु पार्थिवं लिंगं सभर्तृणां विशेषतः ॥३॥ विधवानां निवृत्तानां रसलिंगं वि

शिष्यते॥ विधवानां प्रवृत्तानां स्फाटिकं परिकीर्त्तितं॥४॥ बाणलिंगलक्षणमुक्तं रुद्रसंहितायां॥ नर्मदाजलमध्यस्थं
बाणलिंगमिति स्थितं॥ बाणासुरार्चितं लिंगं बाणलिंगं तदुच्यते॥१॥ तत्रापि॥ त्रिपंचवारं यस्यैव तुलासाम्यं न जायते
॥ तदा बाणं समाख्यातं शेषं पाषाणसंज्ञितं॥१॥ नद्यां वा शैलपेठे वा यो यद्वा सदुपलभ्यते॥ बाणलिंगं तदा विद्धि सर्वलिं-
गोत्तमोत्तमं॥२॥ स्फाटिकं त्रिविधं प्रोक्तं चंद्रसूर्याग्न्यात्मकं॥ श्वेतं रक्तं च पीतं च क्रमात्स्योक्तं द्विजातिषु॥३॥ युगे लिंगभे-
दव्यवस्था युगांतरविषया लैंगे॥ कृते मणिमयं लिंगं त्रेतायां हेमसंभवं॥ द्वापरे पारदं श्रेष्ठं पार्थिवं तु कलौ युगे॥ सर्वव-
र्णाश्रमाणां तु कलौ पार्थिवमर्हति॥ इति एवकारेण कलौ पार्थिवलिंगस्यैव सर्वसाधारण्येनोक्तत्वात्॥ लैंगे॥ रौद्रलिंगं
महाविष्णुर्नैऋत्यामुद्रं च पार्थिवम्॥ चास्तविश्रं समभ्यर्च्य लब्धवान्परमं पदं॥१॥ ब्रह्मा सर्वजगत्कर्ता मृल्लिंगे शंकरार्च-
नात्॥ भारती माता वाणी च तस्मात्पूज्यं महीमयं॥२॥ मृन्मयं लिंगमभ्यर्च्य मरुतः सकलाश्च वि॥ लब्धवंतः श्रियं पू-
र्णां तस्मात्पूज्यं महीमयं॥३॥ यस्येंद्रियाणि पूजार्थं भवंति शुभदेहिनः॥ कदाचिदपि वा विप्र सफलं तस्य जीवितं॥
४॥ एककालं द्विकालं वा त्रिकालमथवा नरः॥ लिंगं महीजं संपूज्य शिवसायुज्यमाप्नुयात्॥५॥ शिवरहस्ये॥ शिव-
लिंगसहस्राणां पूजया यत्फलं भवेत्॥ ततः शतगुणं पुण्यं लिंगे नादिसमुद्भवे॥१॥ ततः शतगुणं पुण्यं रत्नलिंगस्य

सु॰ पूजने ॥ रत्नलिंगसहस्राणां पूजया यत्फलं भवेत् ॥ ३ ॥ ततः शतगुणं पुण्यं धातुलिंगस्य पूजने ॥ धातुलिंगसहस्राणां पू-
जयायत्फलं लभेत् ॥ ३ ॥ ततः शतगुणं पुण्यं बाणलिंगस्य पूजने ॥ अनंतबाणलिंगानां पूजयायत्फलं लभेत् ॥ ४ ॥ त-
तोनंतगुणं पुण्यं रसलिंगस्य पूजने ॥ ततः शतगुणं पुण्यं मृत्तिकालिंगपूजने ॥ ५ ॥ तस्मात्सर्वप्रयत्नेन लिंगं पूज्यं महीम-
६ यं ॥ अकृत्वा पार्थिवं लिंगं योन्यदेवं प्रपूजयेत् ॥ ६ ॥ वृथा भवति सा पूजा स्नानदानादिकं वृथा इति ॥ सनत्कुमारसंहि-
तायां ॥ यथा नदीषु सर्वासु गंगा श्रेष्ठा सरिद्वरा ॥ तथा सर्वेषु लिंगेषु पार्थिवं श्रेष्ठमुच्यते ॥ १ ॥ यथा सर्वेषु मंत्रेषु प्रण-
वो हि महान् स्मृतः ॥ तथा सर्वेषु लिंगेषु पार्थिवो हि महान् स्मृतः ॥ २ ॥ तथा ॥ मृन्मयं लिंगमभ्यर्च्य पुरा लक्ष्मीप्रयत्नतः
॥ जाता सौभाग्यसंपन्ना महादेवप्रसादतः ॥ ३ ॥ लैंगे ॥ जाबालोपनिषत्साध्वी परमज्ञानस्य सिद्धये ॥ प्रधानसाधना-
न्याह ॥ द्विजानामादरेण तु ॥ १ ॥ अविमुक्तं परं क्षेत्रं मन्त्राऽपरमं शुभं ॥ शतरुद्रीयजाप्यं च तथा संन्यासमुत्तमं ॥ २
॥ भस्मनोद्धूलनं चैव त्रिपुंड्रस्य च धारणं ॥ रुद्राक्षधारणं साक्षात्तथा पार्थिवपूजनं ॥ ३ ॥ भस्मसंपादनं ध्यानम-
मेव परमस्य च ॥ एतानि साधनान्याह प्रधानानि मम प्रिये ॥ ४ ॥ इदं च शिवपूजनं नित्यं ॥ तदुक्तं स्कांदे ॥ किं वेदैः ॥ किं २६
ततः शास्त्रैः किं तपोभिरथ व्रतैः ॥ शिवः संपूज्यतां नित्यमुपदेशोयमुत्तमः ॥ १ ॥ शिवधर्मे ॥ भक्त्यैवैकमनाभू-

त्वा यावज्जीवं प्रतिज्ञया ॥ अर्चयेत महादेवमापन्नोपि सदा बुधः ॥ १ ॥ इत्यादौ नियमो यावज्जीवं सदेति श्रवणात् ॥ प्रकरणे ऽप्येवमेव श्रवणाच्च ॥ तथा रु
शिवरहस्ये ॥ शिवलिंगमनभ्यर्च्य यो भुंक्ते मोहसंगतः ॥ स याति नरकं घोरं यावदाचंद्रतारकं ॥ १ ॥ पाद्मे ॥ यो नत्वा ज
श्नते लिंगं तु स्नानादीनां प्रकाशकं ॥ शास्त्रवित् सर्ववेत्तापि चतुर्वेदः पशुरेक सः ॥ १ ॥ ईशानसंहितायां ॥ यस्य नास्ति
गृहे नित्यं शिवलिंगार्चनं शिवे ॥ तद्गृहं चंडिचंडालगृहमेव न संशयः ॥ १ ॥ ॐकारमाहात्म्ये ॥ वरं वंध्या मारी वरं मा-
पितृगर्भस्य पतनं वरं ॥ मृत्युर्जातो ततः तदनु दिवसे वा क्षणेपि वा ॥ वरं हि मो जातो कटिति जनयित्री हि मरणं न तु श्रेयः
शैवेतरकुसुमसंदोहविहरणं ॥ १ ॥ तथा बृहज्जाबालोपनिषदि ॥ अहरहः शिवलिंगमनभ्यर्च्य नाश्नीयात् ॥ फल
मप्यनन्यसू ॥ यद्यश्नीयाद्रेतोभक्षी भवेत् न पापः पवित्रं तत् पृथिव्यां सूर्यं न भवेत् ॥ प्रमादेनैकदा लिंगमनभ्यर्च्य भुक्त्वा भो
जयित्वा वा केशान्वापयित्वा गव्यान्यूपिप्य वसं कृत्वा जले रुद्रस्याने बाजपेत ॥ त्रिवारं प्रातःस्नानीयमादित्यं प्रत्यु
पतिष्ठाय स्वकं कर्म ततो रौद्रैरेव मंत्रैर्भोजनं कुर्यात् ततो भोजयित्वा ब्राह्मणान्पूतो भवति अन्यथा पुरैतोयामना
न श्रुते ॥ १ ॥ जननाशौचे तथा शावाशौचेपि शिवार्चनं न त्याज्यं ॥ किंतु स्पर्शरहितं तत्कार्यं ॥ तदुक्तं स्कांदे ॥ जनना-
शौचमध्येपि कर्तव्यं शिवपूजनं ॥ शावाशौचेपि कर्तव्यं विना स्पर्शं प्रयत्नतः ॥ १ ॥ शंकरार्चनकाले तु द्विजो

नाद्यौ वदोषनाक्॥ अस्पर्शदोषमात्रार्थं सूतकांतेऽप्ययं क्रमः॥२॥ रौद्रेण वरुणा कार्यो होमो रौद्रैः सहस्रकं
॥ उत्सवो जायते यस्मात्तस्मात्तु शिवपूजनं॥३॥ कर्तव्यं मानसं नित्यं दशाहांतेऽप्ययं ततः॥ दशाहे समतीते तु स्नात्वा स्ना
नं यथाविधि॥४॥ शिवलिंगार्चनं कार्यं द्विजस्त्रीभिर्द्विजैरपि॥ होमोयं पुरुषाणां तु स्त्रीणां तु न कदाचन॥५॥
इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे श्रीमल्लिंगपूजोत्कर्षवर्णनं नाम पंचमः किरणः॥५॥ ॥
यथालब्धोपचारैस्तु षोडशैः श्रद्धयान्वितः॥ पूजयेत्सार्चितं लिंगं षष्ठेऽस्मिन् किरणे द्विजः॥१॥ षोडशैरित्यार्षप्र
योगः॥ षोडशोपचाराश्च कालोत्तरे॥ आवाहनासनपाद्यार्घ्यमाचमनीयकं॥ स्नानं वस्त्रोपवीतं च गंधपुष्पे च धूप
कं॥ दीपमन्नं नमस्कारः प्रदक्षिणविसर्जने॥२॥ आवाहनं आभिमुख्येनानुसंधानं॥ विसर्जनं नाम निजरूपेण
स्वस्थानं॥ तदुक्तं कालोत्तरे॥ आवाहनमभिव्यक्तिर्निजलयो विसर्जनं॥ एवं दिने दिने देवं पूजयेदंबिकापतिं॥१॥
एतादृशावाहनविसर्जनयोर्बाणलिंगादावपि संभवात्॥ तत्रापि चावाहनविसर्जनयोरभावेपि षोडशोपचा
रपूजनवैकल्यं॥ यद्वा॥ ध्यानं वस्त्रासनं पाद्यमर्घ्यमाचमनीयकं॥ स्नानं वस्त्रोपवीतं च भूषणानि तथैव च॥
गंधं पुष्पं तथा धूपं दीपमन्ननिवेदनं॥ प्रदक्षिणनमस्कारावुपचारास्तु षोडश॥ इति स्कांदोक्ताः॥ षोडशोप

सु० तायां॥ दक्षिणे स्वगात्रे दिशः स्नात्वेति चिंतयेत् क्षिप्रं॥ गच्छन् समुपविष्टो वा तस्य स्नानं द्रव्यकृति॥ ५॥ इति श्रीमत्स्वा...
नंदविरचिते शैवसुधाकरे उपचारनिरूपणं नाम षष्ठः किरणः॥ ६॥ अथ जलानि स्कांदे॥ नद्याः समुद्रगामिन्याः नदाश्च
१८ स्वयमाहृतं॥ वस्त्रपूतं च शीतं च विशिष्टं शिवपूजने॥ १॥ कांचीखंडे॥ वस्त्रपूते जलैर्लिंगं स्नापयित्वा महामराः॥ लक्षाश्व
मेधजं नित्यं पुण्यं प्राप्नोति मानवः॥ वर्ज्यानि तत्रैव॥ शूद्रानीतं स्त्रियानीतं वामहस्ताहृतं तथा॥ अन्यपूजावशि
ष्टं च जलं त्याज्यं शिवार्चने॥ १॥ वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलं॥ अवर्ज्यं जाह्नवीतोयं तुलसीपद्मबिल्वकं॥ २॥ सि
द्धांतशेखरे॥ कलुषं कृमिसंमिश्रमेकरं पल्वलोदकं॥ अस्पृश्यभूतलस्थं च शिलागर्भजलं च यत्॥ सदाच्छायायुतं त्या
ज्यमंत्यजातिनिषेवितं॥ दूष्यादिदोषसंयुक्तं तोयं शिवार्चने॥ २॥ जलसंग्रहणं कुर्यात् दिवा चोषसि नो निशि॥ ॥
इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे जलोत्कर्षवर्णनं नाम सप्तमः किरणः॥ ७॥ अथाभिषेकः सनत्
कुमारसंहितायां॥ केवलेनोदकेनैव स्नापनं मन्नवेत्सदा॥ गंधोदकं शतगुणं पंचगव्यं ततोऽधिकं॥ तस्माच्छतगुणं क्षीरं १८
सहस्रं कापिलं भवेत्॥ ततः शतगुणं प्रोक्तं सर्पिषा स्नानमेव च॥ २॥ कपिलासंभवेनैव सर्पिषा स्नापयेच्छुभं॥ क्षमा
मि देवि तस्याहमपराधान्बहूनपि॥ ३॥ अभिषेकपात्राणि लैंगे॥ सुवर्णकलशेनाथ तथा वै राजतेन च॥

२९ ल्पपुराणे॥ गोमयादुत्थितः श्रीमान् बिल्ववृक्षः शिवप्रियः॥ तत्रास्ते बिल्ववृक्षस्था श्रीः श्रीवृक्षस्तेन चोच्यते॥१॥ बिल्वपत्रैर्वि
ना पूजां यः करोति शिवस्य च॥ स याति नरकं घोरं यावदिंद्राश्चतुर्दश॥२॥ इदं च निंदावाक्यं॥ न हि निंदेति न्यायेन बिल्वप
त्रसहितशिवार्चनस्यात्युत्कृष्टत्वबोधकं॥ न तु तद्रहितपूजाया निषेधतात्पर्यवत्॥ पूर्वोदाहृतानेकवाक्यविरोधात्॥
ब्रह्मांडपुराणे॥ नित्यमार्द्रैरनाविद्धैर्बिल्वपत्रैः सदा शिवं॥ पूजयस्व महादेवं तस्मान्मा प्रमदो भव॥१॥ सौरपुराणे॥ एकं
बिल्वदलं रम्यं मङ्गल्ये मार्पितं मयि॥ अनंताघहरं नूनं सत्यमेवोच्यते मया॥१॥ दर्शनाद्बिल्ववृक्षस्य स्पर्शनाद्वंदनादपि
॥ अहोरात्रकृतं पापं नश्यते नात्र संशयः॥२॥ ब्रह्मांडे॥ पंचाक्षरेण मंत्रेण बिल्वपत्रैः शिवार्चनं॥ करोति श्रद्धयायु
क्तः स गच्छेदैश्वरं पदं॥१॥ बिल्वपत्रच्छेदने निषिद्धदिनान्याह॥ लैंगे॥ अमारिक्तासु संक्रांतावष्टम्यामिंदुवासरे॥
बिल्वपत्रं न च छिंद्यात् छिंद्याच्चेन्नरकं व्रजेत्॥१॥ नूतनालाभे शुष्कैः पर्युषितैरपि पूजनं कार्य्यं॥ तदुक्तं शिवरहस्ये
॥ शुष्कैः पर्युषितैः पत्रैरपि बिल्वस्य नारद॥ पूजयेद्गिरिजानाथमलाभे यत्नतो नरः॥१॥ तथा॥ तुलस्या बिल्वपत्रे जल
जेषु च सर्वशः न पर्युषितदोषोस्ति मालाकारगृहे तथा॥१॥ सिद्धांतशेखरे॥ पर्युषितानाम तुलसी मासमात्रं न दुष्यति॥ १९
चत्वारिंशद्दिनं बिल्वं कमलं त्रिदिनं स्मृतं॥१॥ केतकी शतपत्रं च पंचदिनं स्थितं॥ पक्षमात्रं दमनकोऽवस्थितो

पिनदुष्यति॥ २॥ जातिपत्रैः फलैश्चापि तथा कुंकुमकेसरैः॥ सुगंधपुष्पैर्यत्नेन सदा पूज्यो महेश्वरः॥ ३॥ नैवं पर्युषितं स्वस्थितं
संवत्सरावधि॥ ४॥ मालायाः पर्युषितत्वं नास्ति तदाह वसिष्ठः॥ अन्यत्रोपर्युषितं वर्ज्यं देवपूजककर्मणि॥ ग्रथितानि च पुष्पा
णि नैव पर्युषितानि हि॥ शुष्कपर्युषितान्यानि अर्पितान्यपि ग्राह्याणि॥ तदुक्तं स्कांदे॥ अर्पितान्यपि बिल्वानि प्रक्षाल्य च पु
नः पुनः॥ शंकरायार्पणीयानि न नवानि यदि क्वचित्॥ खंडितं बिल्वपत्रं च याद्द शंतादृशं शिवे॥ पूत्यहं नियमेनेति शुष्कं जीबा
लत्राखिनः॥ इत्येवं खंडितानामेवेदित्वम्॥ नारदीये॥ सर्वेष्वपि च पत्रेषु बिल्वपत्रं विशिष्यते॥ दिने दिने तु दातव्यं त्रोप्यपि
त्वा पुनः पुनः॥ सप्तरात्रमतिक्रम्य निर्माल्यत्वं प्रपद्यते॥ पाद्मे॥ चूर्णीकृतान्यपि ग्राह्या बिल्वपत्राणि वैदिकाः॥ संपाद्य पू
जयेदेवं शंनवालाभे विचक्षणः॥ बिल्वपत्रमुपक्रम्य॥ स्कांदे॥ वामपत्रे स्थितो ब्रह्मा पद्मनाभश्च दक्षिणे॥ मध्यपत्रे स्थि
तो रुद्रः साक्षात्संसारमोचकः॥ १॥ दलाग्रे स्थिता यक्षास्तु भक्तानां निषेधकाः॥ इंद्रादयो लोकपालास्तत्राग्रे परिकीर्तिताः॥
२॥ पूर्वं नागेन्मृतं न्यस्तं से देवैर्ब्रह्मादिभिः पुरा॥ अतो वै पूर्वभागेन पूजयेद्गिरिजापतिं॥ ३॥ तत्रैव॥ पुष्पं मूर्ध्वमुखं योज्यं पत्रं
योज्यं त्वधोमुखं॥ फलं तु संमुखं योज्यं यथोत्पन्नं तथार्पयेत्॥ लैंगे॥ मणिमुक्ताप्रवालैस्तु रत्नैरप्यर्चनं कृतं॥ न गृह्णाति विना
देवि बिल्वपत्रैर्वरानने॥ बिल्वपत्रसंख्योक्ता॥ वायवीयसंहितायां॥ श्रीपत्रेत्यस्य जपध्यानां संख्या साहस्रिकी मता॥ प्रत्येकम।

परासंख्या ज्ञातमष्टोत्तरं द्विज॥१॥ पुष्पांतरेण नियमो यथालाभं निवेदयेत्॥ शिवरहस्ये॥ धूपदीपोपहारादेरभावेऽपि द्विजोत्तम॥ सां
गं बिल्वदलैरेव भविष्यति शिवार्चनं॥१॥ बिल्वपत्रार्थमन्यत्तु न वस्येव न सर्वथा॥ अज्ञातीतैः क्रयक्रीतैर्बिल्वपत्रैर्जमार्चनं॥
यः करोति स मूढात्मा रौरवं नरकं व्रजेत्॥२॥ तत्रैव॥ बिल्वपत्रैर्महादेवं स्वाहृतैरेव कोमलैः॥ यः पूजयति यत्नेन पदं शाश्वतं निरां
करं॥१॥ अथ पुष्पाणि॥ आरण्यसंभवैः पत्रैः पुष्पैर्वा गिरिसंभवैः॥ अपर्युषितनिश्छिद्रैरस्त्रैर्जंतुवर्जितैः॥१॥ आत्मारा
मोद्भवैरेव पुष्पैः संपूजयेच्छिवं॥ अरक्तैरिति रक्तपुष्पनिषेधो रक्तोत्पलकर्णिकारव्यतिरिक्तविषयः॥ रक्तोत्पलैः क
र्णिकारैर्यः करोति ममार्चनं॥ सत्यापवान्मनुष्येषु ममस्यात्प्रियकृत्तमः॥ इति गारुडे तयोर्विधानात्॥ द्विविधैः कर्णि
कारैश्च पूजयेन्मां वरानने॥ इति नारदीयाच्च॥ स्वाहृतैरेव पूजनं कार्यं॥ तदुक्तं शिवरहस्ये॥ स्वयमुत्पाद्य पुष्पाणि यः
स्वयं पूजयेच्छिवं॥ तानि साक्षात्प्रगृह्णाति देवदेवो महेश्वरः॥१॥ उत्पाद्येत्यस्य आहृत्येत्यर्थः॥ स्वारामसंभवं श्रेष्ठं मध्य
मं विपिनोद्भवं॥ विक्रीतमधमं पुष्पपत्रं च शिवपूजने॥२॥ स्मृत्यंतरेऽपि॥ समित्पुष्पकुशादीनि श्रोत्रियः स्वयमाहरेत्
॥ अशूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः॥१॥ स्वयमाहरेदिति नियमो द्विजानामेव॥ न तु शूद्राणां स्त्रीणां च॥ श्रोत्रि
यपदोपादानात्॥ छेदनं पत्रपुष्पाणां स्त्रीभिः शूद्रैः पूजनेस्तथा न कार्यं सर्वथा राजन्नित्याह भगवान्मनुरिति लैंगात्॥ एवं

च॥ धर्मार्जितधनक्रीतैः॥ पुष्पैः कुर्यात्सदार्चनं॥ उद्धरिष्यस्यसंदेहं स पूर्वांस्तथापरान्॥ इति वचनमपि स्त्रीशूद्रपर
मेव॥ कूर्मपुराणे॥ गृहीत्वा पुष्पाणि देवार्चनविधौ द्विजैः॥ अन्यारामोद्भवान्येव नोगार्थेन कदाचन॥१॥ दैवतार्थं द
त्तं पुष्पमस्तेयं मनुरब्रवीत्॥ याचितैः परपुष्पाद्यैर्यः करोति सदार्चनं॥ वृथा भवति सा पूजा ह्यपराधी भवेत्ततः॥२॥ द
त्तः॥ देवोपरि धृतं यच्च वामहस्तधृतं च यत्॥ अधोवस्त्रधृतं यच्च जलांतः क्षालितं च यत्॥१॥ देवतास्तं भवद्धं च पु
ष्पं निर्माल्यतां व्रजेत्॥ समित्पुष्पकुशादीनि वहंतं नाभिवादयेत्॥२॥ तद्धारी नैव मन्यान् हि निर्माल्यं तद्भवेत्तयोः॥ इ
ति॥ बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृंगदूर्वा॥ मंदारांभोजदर्भा मुनितगरतिलब्रह्मकल्हारमल्लीः॥
चंपासाराति कुंदं मदनमरुबकाबिल्वतो हानि त्रिंशात्॥ त्रिंशात्येका शिरत्रपोदधिनिधिवसुतुर्न्यूयमान्यएवा॥
१॥ अहानि त्रिंशात्॥ मल्लीः राष्ट्रपोदधीत्यत्रार्षत्वमेव गतिः॥ अस्यार्थः॥ बिल्वतः बिल्वादारभ्य मरुबकांत वस्तु विंश
तिः॥ पत्रपुष्पाणि क्रमेण तदुक्तसंख्याकान्यहानि तावद्दिवसपर्यंत पर्युषितानि न भवंति॥ तदुत्तरं पर्युषितानि भवंति॥ यथा
बिल्वस्त्रिंशद्दहानि॥ ३०॥ न पर्युषितः॥ अपामार्गस्त्रिंशात्॥ ३०॥ जाती त्रीणि॥ ३॥ तुलसी एकं॥१॥ शमी अरिः॥ ६॥ श
तावरी रात्रिः॥१२॥ केतकी उदधिः॥ भृंगः भृंगराजः निधिः॥९॥ दूर्वा वसुः॥८॥ मंदारः नृः॥१॥ अंभोजं नृः॥१॥ दर्भाः

यमः॥२॥ पुनरपिमुनिः अगस्तिः त्रिंशत्॥३०॥ तगरः त्रिंशत्॥३०॥ तिलः॥३॥ ब्रह्मपलाशः॥१॥ कल्हारः॥६॥ मल्ली
॥१॥ चंपा॥७॥ अश्वाराती श्वेतः॥९॥ कृष्णश्च॥८॥ कुंभः॥१॥ दमनकः॥ मरुवकः॥२॥ निर्णयसिन्धौ तु॥ बिल्वापा
मार्गजातीतुलसिशमिशताकेतकीभृंगदूर्वामन्दारनीलाहिदमं मुनितिलतगरब्रह्मकल्हारमल्लीः॥ पद्माश्वारातिकु-
 न्दमनमरुबकाबिल्वतोऽह्णनिशारतास्त्रिंशाव्यकार्यरीशोदधीत्यादिः पाठः॥ मन्दो मन्दारः॥ अह्णी नागकेशरः॥ कुम्
नीपाटला॥ इन्द्राणी एकादश॥ उदधिश्चत्वारः॥ इति व्याख्यापितश्चैव॥ स्कांदे॥ संहृतैरन्यकुसुमैः पूजनीयो महेश्वरः॥ हृं-
तहीनैः पूजनीयो बृहतीकुसुमैः शिवः॥१॥ अलाभेतु सुपुष्पाणां पत्रादीनि समर्पयेत्॥ पत्रादीनामलाभेतु नमस्कारः प्रशस्यते॥ पु
ष्पपत्रयभाजायाद्विगुणं पुण्यं॥ तदुक्तं लैंगे॥ प्रत्येकं तु स्वपुष्पेण दशसौवर्णिकं फलं॥ सम्मिश्रं तु पशार्दूलं तद्दश द्वि
गुणं भवेत्॥२॥ नारदीये॥ यस्य वृक्षस्य पत्राणि पुष्पाणि च फलानि च॥ महादेवोपयुक्तानि सोपियाति परां गतिं॥१॥
सिद्धांतशेखरे॥ शैवागमे पु सर्वत्र प्रशस्तं करवीरकं॥ तस्य मध्ये स्थितो देवो लिंगाकारः सपीवकः॥१॥ अर्पितं त
न्न निर्माल्यं पुनः शेषस्य शिवं यजेत्॥ करवीरसहस्रेभ्यः शमीपुष्पं विशिष्यते॥२॥ शमीपुष्पसहस्रेभ्यो ल्येकं धत्तूरकं
वरं॥ धत्तूरकसहस्रेभ्यो बृहत्पुष्पं विशिष्यते॥३॥ बृहत्पुष्पसहस्रेभ्योप्यपामार्गो विशिष्यते॥ पुष्पप्रकरणे वि॥ पुष्प

स्यसकंटकत्वादपामार्गस्यपत्रंप्रशस्तं॥४॥ अपामार्गसहस्रेभ्यः श्रीमन्नीलोत्पलंवरं॥ नीलोत्पलसहस्रेण योमालां
संप्रयच्छति॥ शिवायविधिवद्भक्त्यातस्यपुण्यफलंशृणु॥ कल्पकोटिसहस्राणिकल्पकोटिशतानिच॥६॥ वसे
च्छिवपुरेश्रीमान्शिवतुल्यपराक्रमः॥ बृहतीकुसुमैर्नक्तायोलिंगंसमर्चयेत्॥७॥ गवामयुतदानस्यफलंप्राप्य
शिवंव्रजेत्॥ मल्लिकोत्पलपुष्पाणिनागपुन्नागचंपकं॥८॥ अशोकश्वेतमंदारकर्णिकारबकानिच॥ करवीरार्कमंदार
शमीतगरकेसरं॥९॥ कुशापामार्गकुमुदकदंबबकुलान्यपि॥ पुष्पैरेतैश्चयोलिंगंपूजयेच्चसदाशिवं॥ करवीरसमाज्ञे
याजातीविजयपाटली॥ श्वेतमंदारकुसुमंसितपद्मेनतत्समं॥१०॥ नागचंपकपुन्नागाधत्तूरकुसुमैःसमाः॥ अथवर्जा
निसौरपुराणे॥ केशकीटापविद्धानिशीर्णपर्युषितानिच॥ स्वयंपतितपुष्पाणित्यजेदुपहतानिच॥१॥ उग्रगंधानिपु
ष्पाणिस्फुटानितानिवर्जयेत्॥ एरंडपत्रैश्चतथावासोभिःकुत्सितात्मभिः॥२॥ आनीतंनार्पयेच्छंभोःप्रमादादपिदो
षकृत्॥ कार्त्तिकेसोमवारेविशेषतोधत्तूरपुष्पेणपूजाकार्या॥ तदुक्तंशिवरहस्ये॥ एकंवापितुधत्तूरंकार्त्तिकेसोम
वासरे॥ यदिदद्यात्ममप्रीत्यामयिलीनोभविष्यति॥१॥ पुष्पसमर्पणप्रकारश्चोक्तः प्रयोगपारिजाते॥ मध्यमाना-
मिकामध्येपुष्पंसंगृह्यपूजयेत्॥ अंगुष्ठतर्जन्यग्राभ्यांनिर्माल्यमपनोदयेत्॥१॥ नारदीये॥ तुलसीदलमात्रेणयः

शै॰सु॰ करोति शिवार्चनं॥ कुलैकविंशमुद्धृत्य शिवलोके महीयते॥१॥ वन्यपुष्पाणां प्राशस्त्यमुक्तं॥ पाद्मे॥ शिवगीतायां॥ वन्ये
पुष्पैर्यादृशी प्रीतिर्वर्त्तते परमेशितुः॥ उत्तमेष्वपि नास्त्येव ग्राममध्येष्वपि तादृशी॥१॥ इति श्रीशैवसुधाकरे बिल्वादिपत्रपुष्पो
त्कर्षनिरूपणं नामैकादशः किरणः॥११॥ अथ धूपः॥ वायवीयसंहितायां॥ चंदनागरुकर्पूरकुष्ठगुग्गुलचूर्णकैः॥ घृते
२२ न मधुना चैव सिद्धो धूपः प्रशस्यते॥१॥ सौरपुराणे॥ गुग्गुलं घृतसंयुक्तं साक्षाद्ह्लादति शंकरः॥ गोमूत्राद्गुग्गुलुर्जातः
सुगंधिः प्रियदर्शनः॥१॥ स धूपः सर्वदेवानां शिवस्य च विशेषतः॥ लैंगे॥ कृष्णागरुं सकर्पूरं धूपं दद्याच्छिवाय वै॥ नैरं
तर्येण मासार्द्धं तस्य पुण्यमनंतकं॥१॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे धूपोत्कर्षवर्णनं नाम द्वाद-
शः किरणः॥१२॥ अथ दीपः॥ वायवीसंहितायां॥ कपिलासंभवेनैव घृतेनातिसुगंधिना॥ नित्यं प्रदीपिता दीपाः
शस्ताः शंकरपूजने॥१॥ शस्ता इत्यनेन कपिलाघृतासंभवे कपिलाव्यतिरिक्तानां गवां घृतेनापि दीपाः कार्या इति बोधि
तं॥ भविष्ये॥ घृतदीपप्रदानेन शिवाय शतयोजनं॥ विमानं लभते दिव्यं सूर्यकोटिसमप्रभं॥१॥ घृताऽसंभवे तु॥ तिलतै
लेन वा कार्यो दरिद्रेण विपश्चिता इति॥ अतसीतैलेनापि कार्यस्त्वुक्तं॥ नागरखंडे॥ अतसीतैलयुक्ता ये दीपा दत्ताः २२
॥ शिवालये॥ दशपूर्वैर्दशापरैस्ते समेताः शिवालये॥१॥ वसंतीति शेषः॥ शिवालये कैलासे॥ कौसंभते

लेनापि दीपः कार्यस्तदुक्तं॥ स्कांदे॥ कुंकुमस्य घृतेनैन दीपा दत्ताः शिवालये॥ सानिनस्तत्र विध्यंति दीपदानफलेन
हि॥१॥ कार्त्तिक्यां शिवाग्रे दीपदानमतिप्रशस्तं॥ तदुक्तं तत्रैव ये दीपमालां कुर्वंति कार्त्तिक्यां श्रद्धयान्विताः॥ याव
त्कालं प्रज्वलंति दीपास्ते लिंगमग्रतः॥१॥ तावद्युगसहस्राणि दाता स्वर्गे महीयते॥ अत्र कालशब्दः क्षणादिपरत्वेन
योजनीयः॥ लिंगमिति षष्ठ्यर्थे द्वितीया॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे दीपोत्कर्षवर्णनं नाम त्रयोदशः
किरणः॥१३॥ अथ नैवेद्यं॥ सौरपुराणे॥ शालितंदुलप्रस्थेन कुर्यादन्नं सुसंस्कृतं॥ नानाव्यंजनसंयुक्तं शिवलोके मही
यते॥१॥ गुडखंडघृतानां च भक्ष्याणां च निवेदनात्॥ घृतेन पाचितानां च दत्त्वा शतगुणं भवेत्॥२॥ शिवधर्मोत्तरे॥ स
दा शिवस्य नैवेद्ये यावत्सिक्थानि संख्यया॥ तावद्वर्षसहस्राणि दाता शिवपुरे वसेत्॥३॥ घृतसूपयुतैः सिक्थैः पुण्यं शत
तगुणोत्तरं॥ उपदंशायुते ज्ञेयं पुण्यं दशगुणोत्तरं॥५॥ फलं चित्रान्ननैवेद्यैर्विज्ञेयमयुताधिकं॥ स्कांदे॥ यावंतस्तंदुला
स्तस्मिन्नैवेद्ये संति संख्यया॥ तावद्वर्षसहस्राणि शिवलोके महीयते॥१॥ दद्याद्दिने दिने स्वन्नं प्रस्थाहारसंमितं॥ इदमना
ढ्यविषयकं॥ आढ्यस्तु प्रस्थदं महानैवेद्यं कुर्यात्॥ महानैवेद्यलक्षणमुक्तं विद्येश्वरसंहितायां॥ शालितंदुलभारेण मारि
चप्रस्थकेन च॥ यवैश्च द्वादशप्रस्थैर्मध्वाज्यकुडवेन च॥१॥ द्रोणमानेन मुद्गान्नं द्वादशव्यंजनान्वितं॥ घृतपक्वैः सूपैश्च

मोदकैर्मल्लिकादिभिः ॥ २ ॥ द्वादशैश्चदधिक्षीरद्वादशावस्थकेन च ॥ द्वादशैरितिद्वादशभिरित्यर्थः ॥ इदंपूर्वोक्तनालि
केरफलादीनिसहस्रशतसंख्यया सहस्रंवाशतंवाइतिसहस्रशतंइतिबहुव्रीहिः ॥ इयंसंख्याफलसमुदायापेक्षया ॥ नतु
प्रत्येकापेक्षया ॥ द्वादशक्रमुकैर्युक्तं षड्विंशत्पत्रकैर्युतं ॥ कर्पूरखदिरचूर्णेन पंचसौगंधिकैर्युतं ॥ तांबूलमेवंकथितंमहा
नैवेद्यलक्षणं ॥ इतिश्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे नैवेद्योत्कर्षवर्णनंनामचतुर्दशः किरणः ॥ १४ ॥ ॥
अथतांबूलं ॥ काशीखंडे ॥ मुखवासंतुयोदद्याद्दत्वानैवेद्यमुत्तमं ॥ संख्यासमुद्ररत्नानांकथंचित्कर्तुमिष्यते ॥ १
॥ मुखवासादिदानस्यकः संख्यामत्रकारयेत ॥ मुखवासंतांबूलमित्यर्थः ॥ इतिश्रीमत्स्वामिसदानंदविरचिते शै
वसुधाकरेतांबूलोत्कर्षवर्णनंनामपंचदशः किरणः ॥ १५ ॥ अथप्रदक्षिणा ॥ सनत्कुमारसंहितायां ॥ प्रदक्षिणा
नमस्कारौसर्वाभीष्टप्रदावुभौ ॥ पूजांतेचसदाकार्यौभोगमोक्षार्थिभिर्नरैः ॥ १ ॥ बृहन्नारदीये ॥ शिवंप्रदक्षिणीकृत्यस-
व्यासव्यविधानतः ॥ यत्फलंसमवाप्नोतितन्मेनिगदतःशृणु ॥ १ ॥ राजन्प्रदक्षिणैकेनमुच्यतेब्रह्महत्यया ॥ द्विती
येनाधिकारित्वंतृतीयेनेंद्रसंपदं ॥ प्राप्नोतीतिशेषः ॥ कूर्मपुराणे ॥ प्रदक्षिणंद्विजःकुर्यात्पंचब्रह्माणिवैजपन् ॥ पंच २३
ब्रह्माणिसद्योजातादिपंचमंत्राः ॥ १ ॥ प्रदक्षिणसंख्यामाह ॥ शिवरहस्ये ॥ शिवप्रदक्षिणंकुर्यात्स्वयमष्टोत्तरंशतं ॥

सहस्रमयुतं लक्षं कोटिमन्येन कारयेत्॥१॥ प्रदक्षिणात्रयं कुर्यात्तथा पंचदशाथवा॥ अष्टौ द्वादश वा वा का-
र्यास्त्वधिका अपि शक्तितः॥१॥ इति कालभेदात्संख्याभेदमाह॥ शिवरहस्ये॥ प्रातः शिवार्चने देवि दश कार्याः
प्रदक्षिणाः॥ मध्याह्ने द्वादश वाथ एकादश सायाह्ने सादरं॥१॥ प्रदक्षिणप्रकारः॥ स्कांदे॥ वृषभांतरितो भूत्वा पीठकां-
तरमेव च॥ प्रदक्षिणां न कुर्वीत कुर्वन्विपदमश्नुते॥ पाद्ये॥ अपसव्यं यतीनां तु सव्यं तु ब्रह्मचारिणः॥ सव्यापसव्यं गृह-
स्थस्य शंभोः प्रोक्तं प्रदक्षिणं॥२॥ सव्यासव्यस्वरूपं तु॥ स्थाने वृषभस्य संकल्प्य वृषभादौ प्रदक्षिणं॥ सव्यं सव्यं विजानी-
यादपसव्यमपसव्यकं॥ वृषे चंडे वृषे चैव सोमसूत्रे पुनर्वृषे॥ इति बृहन्नारदीये उक्तं॥ चंडस्थानमैशानीदिक नव प्रदक्षि-
णापेतं यः कुर्यात्तु प्रदक्षिणं॥ त्रिंशत्सहस्रसंख्याक प्रदक्षिणफलं लभेद्दिव्यपि॥ तत्रैवास्या एव नव प्रदक्षिणत्वमुक्तं
॥गृहस्थानामपि ज्योतिर्लिंगादिषु सव्यासव्यनियमो नास्ति॥ तदुक्तं सूतसंहितायां॥ ज्योतिर्लिंगे रत्नलिंगे॥ स्वयंभुवि त-
थैव च॥ वृषचंडादिनियमः स्फरेश्वरे न विद्यते॥ लिंगपुराणे॥ सर्वदिक्षु महाभाग विभोः कुर्यात्प्रदक्षिणं॥ सोमसूत्रा-
दिनियमो नास्ति विश्वेश्वरालये॥ सोमसूत्रोल्लंघने दोषो नास्तीति भावः॥१॥ विभोर्विश्वेश्वरस्य॥ आदिपुराणे॥ पश्चिमा-
भिमुखं लिंगं लिंगीशिवविवर्जितं॥ गिरिलिंगं स्थललिंगं जललिंगं तथैव च॥ लिंगेष्वेतेषु सर्वेषु कुर्यात्पूर्णप्रदक्षिणं॥ ।

पश्चिमाभिमुखं विश्वेश्वरादि॥ गिरिलिंगं त्र्यंबकादि॥ स्थललिंगं काश्यपादि॥ जललिंगं वरुणेश्वरादि॥ एतेषु पि
प्रदोषकाले सव्यापसव्यप्रकारेणैव प्रदक्षिणा कार्या॥ अत एव॥ सनत्कुमारसंहितायां॥ सव्यापसव्यप्रकारेणैव भ्रा
सेन अष्टम्यां प्रदोषे विश्वेश्वरे॥ प्रदक्षिणा कृता इत्युक्तं॥ लिंगांतरे तु॥ सति सामर्थ्ये गृहस्थेन सर्वदा सव्यापसव्यप्रका
२४ रेणैव प्रदक्षिणा कर्तव्या॥ असति तु कालांतरे सव्यापसव्यप्रकारवर्जनेपि न दोषः॥ अवश्यं सव्यापसव्यप्रकारेणैव प्र
दक्षिणा कर्तव्या॥ तदुक्तं शिवरहस्ये॥ शाक्तैस्तु सर्वदा कार्यं सव्यासव्यप्रदक्षिणं॥ इदं कार्यं प्रदोषेषु शक्तिहीनैरपि द्वि
जैः॥१॥ अशक्तानां कालांतरे सोमसूत्रलंघनेन दोष इति भावः॥ प्रदक्षिणानियमो भविष्ये॥ आसन्नप्रसवा नारी ज
लपूर्णं घटं यथा॥ उद्वहंती शनैर्याति तथा कुर्यात्प्रदक्षिणं॥ पदे पदांतरं गत्वा करौ चलनवर्जितौ॥ वाचा स्तोत्रं हृदि ध्या
नं चतुरंगं प्रदक्षिणं॥२॥ नारदीये॥ शिवप्रदक्षिणायां तु मौनं कार्यं प्रयत्नतः॥ कृतांजलिपुटैरेव शिवस्मरणपूर्वकं
॥३॥ बृहन्नारदीये॥ शिवप्रदक्षिणे कुर्वन्सोमसूत्रं न लंघयेत॥ लंघिते त्वेकमेव स्यादनुच्छिष्टेऽच्युतत्रयम्॥ सोमसूत्र
मानमुक्तं॥ सिद्धांतशेखरे॥ प्रासादविस्तारसमानसूत्रं सोमस्य सूत्रं दिशि सोमसूत्रं॥ सूत्रार्द्धहीनं लंघनतो न दोषः सदो २४
षमन्यंतरलंघनेन तु॥१॥ अस्यार्थो लिंगार्चनवेदिकादि संमतः॥ प्रासादशब्देन प्रासादांतर्गतो लिंगनिस्यंतरालवे

शो गृह्यते॥ तद्विस्तारेण समानसूत्रं यत् भित्तेर्बहिः॥ सोमस्य दिशि उत्तरदिशि सूत्रं तत्सोमसूत्रं॥ तावन्मात्रमुल्लंघने दो
षश्चांडजक इत्यर्थः॥ सूत्राद्बहिः स्कंधपरिमाणात् सोमसूत्राद्बहिर्न दोषः॥ ततोऽग्रे प्रणालिकोल्लंघनेपि न दोषः॥ किंतु॥
एकमेवैकं स्यादिति भावः सर्वथा तदुल्लंघने तु अप्रयुतत्रयं प्रदक्षिणाफलं स्यात्॥ यथाकामव्याख्याने तु एकमेव स्यादि
ति बृहन्नारदीयोक्तं न संगच्छेत॥ तत्त्वं घनस्य निबिडत्वात् काष्ठलोष्ठादिभिराच्छिन्नायाः॥ उक्तपरिमाणे सोमसूत्रांतर्गता
या अपि प्रणालिकायाः भित्तेर्बहिर्लंघने तु न दोषः॥ तदुक्तं स्मृतसंहितायां काष्ठलोष्ठादिभिश्छन्ने लंघनेनैव दुष्यति॥ सो
मसूत्रमनुल्लंघ्य गर्भे कार्या प्रदक्षिणा॥१॥ तृणैर्यदि न वेद्यूर्ध्वं नैनो वेसत्र न सर्वथा॥ सोमसूत्रमनुल्लंघ्य गर्भे सवृषभेपि च
॥२॥ पिहितं वाप्यपिहितं सोमसूत्रं न लंघयेत्॥ बहिश्चापिहितं सूत्रमुल्लंघ्य प्राप्नोति यातनां॥३॥ अपिहितमिति नञ्स
मासः॥ बृहन्नारदीये॥ प्रदक्षिणात्रयं कृत्वा नमस्कारैश्च पंचभिः॥ पुनः प्रदक्षिणं कृत्वा शिवलोके महीयते॥१॥ एक
हस्तनमस्कारादेकस्माच्च प्रदक्षिणात्॥ अंधकारं नमस्कारादध्वपुण्यं विनश्यति॥ ॥इति श्रीमत्स्वामिसदानंदविर
चिते शैवसुधाकरे प्रदक्षिणोत्कर्षवर्णनं नाम षोडशः किरणः॥१६॥ अथ नमस्कारः॥ ब्रह्मवैवर्ते॥ पृथिव्यां त्वा महादेवं लिं
गरूपिणमव्ययं॥ प्रदक्षिणात्रयं कृत्वा प्रणमेद्दंडवच्च॥१॥ लैंगे॥ साष्टांगो दंडवज्जनो भक्तिपूर्वकं॥ कर्तव्यः श्रीमहे

ञायदेवदेवायसर्वदा॥२॥शिवधर्मोत्तरे॥ये कुर्वंति नमस्कारमीश्वराय क्वचित्क्वचित्॥संपर्कात्कौतुकाल्लोभात्ते वि
मानैः प्रयांति च॥१॥काशीखंडे॥लिंगं समर्चितं दृष्ट्वा यः कुर्यात्प्रणतिं सकृत्॥संदेहो जायते तस्य पुनर्देहनिबंधने॥त
थाध्यासः॥एवंविधे कलियुगे दोषाणामेकशोधनं॥महादेवनमस्कारो ध्यानं दानमिति श्रुतिः॥१॥शिवरहस्ये॥अष्टांग
२५ सहिताः कार्याः प्रणामाः पार्वतीपतेः॥अष्टांगान्युक्तानि॥कूर्मपुराणे॥जानुबाहुशिरश्चक्षुर्गंडांतांगाष्टकं यदि॥दंडवत्प्र
णतास्तेन सदष्टांगनतिर्भवेत्॥वक्षोदृष्टिः साष्टांगनमस्कारकरणे प्रत्यवायोप्युक्तस्तत्रैव॥यः साष्टांगं महादेवं न नमेत्सावधान
तः॥सदष्टांगमिति ज्ञेयः सत्यं सत्यं न संशयः॥१॥लैंगे॥शिवस्यार्द्धनमस्कारः शिवद्वेष इति स्मृतः॥सपुण्यनाशकस्तस्मात्
त्कर्त्ता पापकृद्भवेत॥१॥पतित्वा दंडवद्भूमावुत्थायोत्थाय भूरिशः॥प्रणामास्तु प्रकर्त्तव्याः शंकराय महात्मने॥२॥स्कां
दे॥उत्थायोत्थाय साष्टांगान्प्रणामान्विंशदुत्तमान्॥यः करिष्यति असौ सर्वपापेभ्यो विमुच्यते॥१॥कौर्मे॥सदा शिवं
नमस्कुर्यान्मंत्रेणानेन शंकरं॥शिवरहस्ये॥एकविंशतिः कर्त्तव्याः प्रणामाः पार्वतीपतेः॥एकादशाथवाष्टौ वा नातो
न्यूनाः कदाचन॥१॥अन्यत्तु॥नमस्कारत्रयं कुर्यान्महादेवं महानरः॥१॥तदशक्तास्का विषयं॥यत्तु सिद्धांतशेखरे॥दंडव २५
न्नमस्कारः स्यात्प्रणामोऽयं नमस्कृतिः॥अष्टांगैश्च पंचांगैस्त्रिशिरंगैस्त्रिधा मतः॥१॥शिरसा हस्तयुग्मेन कर्णाभ्यां

चुबुकेन च॥ बाहुभ्यां जानुभ्यामष्टांगैः संस्मृत्य प्रणमेच्छिवं॥२॥ शिरोहस्तौ च जानुभ्यां पंचांगैः प्रणमेच्छिवं॥ शि
रसा हस्तयुग्मेन त्रिभिरंगैर्नमेच्छिवं॥३॥ यथोचितं नमेदेतद्देशकालाद्यपेक्षयाऽनिशं॥ तदपि साष्टांगकरणसमर्थविष
ये॥ देशकालाद्यपेक्षयेति तत्रैवोक्तत्वात्॥ ब्रह्मवैवर्ते॥ अग्रे पृष्ठे वामभागे समीपे गर्भमंदिरे॥ जपहोमनमस्कारान्न कु
र्याद्देवतालये॥१॥ अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः॥ वामभागे भवेन्नाशो दक्षिणे सर्वकामदः॥२॥ अत्र दक्षिण
भागो देवस्य॥ न स्वात्मनः॥ तदुक्तं ज्ञानरत्नमालायां॥ देवस्य दक्षिणे भागे नमस्कारं प्रकल्पयेत्॥ इति विशेषश्च एतस्य पश्चिमा
भिमुखत्वेन मुक्तिमंडपस्य वामभागत्वेऽपि विशेषवचनात्॥ तत्रैव प्रणामादिकं कार्यं॥ तदुक्तं काशीखंडे॥ देवस्य दक्षिणे भागे
स्थित्वा निर्वाणमंडपे॥ नमस्कारत्रयं कृत्वा सर्वपापैः प्रमुच्यते॥१॥ इति दक्षिणे भागे दक्षिणस्यां दिशि इत्यर्थः॥ इति न वि
रोधः॥ ब्रह्मनारदसंवादे त्वत्र मम निर्वाणमंडपे॥ इति च॥ केचित्तु॥ पश्चात्पशुपतेरग्रे दंडवत्पतितस्य हि॥ पतंति पातकाः
सर्वे नोत्तिष्ठंति कदाचन॥ इति विशेषविधानात् शंभोरग्र एव नमस्कारः कार्यः इत्याहुः॥ ॥इति श्रीमत्स्वामिसदानंदवि
रचिते शैवसुधाकरे नमस्कारात्मकषष्ठवर्णनं नाम सप्तदशः किरणः॥१७॥ सूतसंहितायां शिवपूजायां दिङ्यमादिक
मुक्तं॥ स्नात्वा शुद्धासने देशे गोमयेनोपलेपिते॥ समासीनः सदा मौनी निश्चलोदङ्मुखः शुचिः॥१॥ इहस्पतिकः॥ काञ्च

ॐ·सु· निवेदनद्विभेदमाह॥ शिवार्चनंसदाकार्यंभुक्तिमुक्तिप्रदंनृभिः॥ आकल्पशिवमोदगास्येस्तत्रातःसायंनिवसेत्सुखइति॥ ॥
॥ इतिश्रीमत्स्वामिसच्चिदानंदविरचितेशैवसुधाकरेद्वितीयमनिरूपणंनाम अष्टादशः किरणः॥१८॥ अथनैवेद्यभ
क्षणनिर्णयः॥ जाबालोपनिषदि॥ रुद्रभुक्तंभुंजीत॥ रुद्रपीतंपिबेत॥ रुद्राघ्रातंजिघ्रेद्रुद्रेणातमश्नंतिरुद्रेणपीतंपिबंति
२६ ॥ रुद्राघ्रातंजिघ्रंति॥ तस्माद्ब्राह्मणाःप्रशांतमनसोनिर्माल्यमेवभक्षयंति॥ मत्रशिवनिर्माल्यतदितरभोजनस्यरागतः॥ प्रा
तत्वात्भुंजीतइत्यादिवपरिसंख्याविधिः॥ पचनखभक्षणादिविधिवत॥ एतदेवशिवनिर्माल्यमेवभक्षयंतीत्येवकारेण
दृढीकृतं॥ ब्राह्मणाइति॥ क्षत्रियादेरप्युपलक्षणं॥ ब्राह्मणपदस्य॥ अर्थवादस्थत्वेनोपसंहारस्थत्वेनचउपक्रमस्थ
विधिसंकोचकत्वासंभवात्॥ एतद्धिविनियमितभोजनस्यैवसायंप्रातर्द्विजातीनामशनंश्रुतिचोदितमित्यादे
प्राङ्मुखोन्नानिभुंजीतेत्यादौचदेशकालादिनियमः क्रियते॥ एवंचसतियद्यपिश्रुतिविरोधात्॥ शिवनिर्माल्य-
भक्षणनिंदावाक्यानिसर्वाणिवेष्टनस्मृतिवद्वक्ष्यमाणानीतिवक्तुमुचितं॥ अतएवविरोधेत्वनपेक्षंस्याद्सतिह्यनुमा
नइतिजैमिनिसूत्रं॥ श्रुतिस्मृतिविरोधेतुश्रुतिरेवबलीयसी॥ स्मृत्याचारविरोधेतुस्मृतिरेवगरीयसी॥ तिन्यायः २६
॥ श्रुतिस्मृतिसदाचारइतिमन्वादिसंग्रहीतावरोहक्रमस्त्वसंगच्छते॥ तथापि॥ अस्यायद्विजनबोधनायनिर्माल्य

भक्षणनिषेधवाक्यानां बहुपुराणवचनावष्टंभेन व्यवस्थोल्लिख्यते॥ तत्र तावद्विधयः॥ लैंगे॥ पुष्पं फलं स्रगंधं च
वस्त्राण्याभरणानि च॥ शिवार्पितानि स्वीकुर्यादन्यथा किल्बिषी भवेत्॥१॥ शिवाग्रे शिवनिर्माल्यं गृह्णीनैव शिवद्वि
जात्॥ स्वयमेवाददानस्तु नरकं प्रतिपद्यते॥२॥ ब्रह्मांडे॥ मत्यमन्नं प्रयत्नेन निवेद्याश्नाति यः सदा॥ स भूपालः सर्व
वेत्ता भवत्येव हि सर्वथा॥३॥ अतीतानागतं ज्ञानं भूपालत्वं च शाश्वतं॥ जातिस्मरत्वं सौंदर्यं मन्नैवेद्यस्य भक्षणात्॥४॥ म
न्नैवेद्यमनुच्छिष्टं मत्वानुच्छिष्टमुत्तमं॥ योश्नाति स तु सर्वज्ञः स भूपालोपि जायते॥५॥ निर्माल्यसलिलं पीत्वा देवस्य मम शू
लिनः॥ क्षयापस्मारकुष्ठाद्यैः सद्यो मुच्येत बंधनात्॥६॥ निर्माल्यं परमं पुण्यं नैवेद्यं पापनाशनं॥ ब्रह्मचारिगृहस्थानां य
तीनां च विमुक्तिदं॥७॥ निर्मलत्वाच्च निर्माल्यं नृणां नैर्मल्यकारणं॥ यद्यदात्महितं लोके तत्तद्द्रव्यं परं प्रयत्॥८॥ शिव
लिंगार्पितं कुर्यात्तत्र तुष्यति शंकरः॥ उपवाससहस्राणि प्राजापत्यायुतानि च॥९॥ शिवार्पितं विना भुंक्ते सद्यो भवति
किल्बिषी॥ पूर्वार्द्धं कुर्वन्निति शेषः॥ सूतसंहितायां॥ शंभोर्निर्माल्यकं शुद्धं भुंजीयात्सर्वतो द्विजः॥ अन्यदेवस्य नै
वेद्यं भुक्त्वा चांद्रायणं चरेत्॥ स्कांदे॥ प्रसादमन्यदेवस्य भुंजतां किल्बिषं भवेत्॥ शिवस्यैव तु निर्माल्यं भक्त्या धार्यं
द्विजातिभिः॥ इत्यादि शिवपुराणे॥ निर्माल्यलंघने दोषो धारणे च विशेषतः॥ न धारयेत्क्वचिच्छंभोर्निर्माल्यं न च भक्ष

येत्॥ इत्यादिनिषेधवाक्यानि तत्र अवस्थामात्र॥ नारदः॥ शिवानुभूतमखिलं परिभाषते॥ भोज्यं धार्यमिति द्वैधाविद्धं च तत भ
दिष्यते॥२॥ देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितं॥ चंडद्रव्यं बहिःक्षिप्तं निर्माल्यं षड्विधं मतं॥२॥ इति निर्माल्यस्य षड्विधत्वमु
२७ क्तं॥ दासीदासादीनां देवस्वत्वं देशमरत्नप्रकरत्नादीनां देवताद्रव्यत्वं सकल्पपूर्वकं समर्पितानामन्नजलादीनां नैवेद्यत्वं चो
क्तं एतत्त्रिविधं निर्माल्यमनर्हमिति कथ्यते॥ प्रमादाद्भोजनं कुर्वन् भूमौ सम्यादमंगलः॥१॥ इति एतत्त्रिविधस्याप्यस्य भ
ोजनं निषिद्धम्॥ शिवोपभुक्तं स्रग्गंधमन्नपानादिकं तथा॥ निवेदितमिति प्रोक्तं सर्वपापहरं परं॥ इति निवेदितस्रग्गंधादि
भोजनं संस्कृतम्॥ चंडद्रव्यबहिःक्षिप्तयोरनर्हत्वमुक्तम्॥ इदमाह॥ निर्माल्यं षड्विधं भोज्यमेकमेव निवेदितम्॥ अतो यानि
विधायकवचनानि तानि निवेदितविषयाणि॥ यानि तु निषेधवाक्यानि॥ तानि देवस्वादिपंचविधनिर्माल्यविषयाणीति
नारदसंमता व्यवस्था वेदितव्या॥ इदं च निवेदितं शिवेतरदेवभक्तैरपि भोज्यं॥ सदन्नुक्तं नृंजानन इति स्वीदाहृतभक्तिबल
त्॥ अतोऽतिरिक्तं तु एतैर्न भोज्यं॥ शिवभक्तैस्तु निवेदितादितरदपि भोक्तव्यं॥ इति शिवपुराणादिसंमता व्यवस्था॥ तथा
हि शिवपुराणे॥ निर्माल्यं निर्मलं शुद्धं निर्मलत्वादनिंदितं॥ तस्माद्भोज्यं निर्माल्यं वा कृतैः शिवात्मकैः॥१॥ भीमानन्दध २७
रेयचक्रं भो निर्माल्यं च न लंघयेत्॥ जिह्वा वा पल्लसंयुक्तः एषसंस्कारवर्जितः॥२॥ शिवनिर्माल्यभोजी च वरो एवं नरकं

पूजादेतिशिवसंहितायां॥ व्यासजैमिनिसंवादे जैमिनिः॥ अनर्हं नम नैवेद्यं पादांबुकुसुमं दलं॥ इतीश्वरेण कथि
तं तत्र केचिन्महर्षयः॥१॥ वदंति तत्कथं स्वामिन्यथार्थं कथयस्व मे॥ व्यासः॥ देवदेवस्य वचसो विषयोयं न जैमिने
॥वीरभद्रेण शापिताः शिवभक्तिपराङ्मुखाः॥१॥ शंभोरन्यत्र देवेषु ये भक्त्या येन दीक्षिताः। तेषामनर्हमीशस्य तत्प्रसादच
तुष्टयं॥२॥ अत्रापि शिवपुराणे॥ शिवभक्तिवर्जितानां निर्माल्यभोजननिषेधः सामान्येन प्रतीयते॥ शैवसंहितायां
च॥ पाद्यं वा देरनर्हत्वं सामान्येन प्रतीयते॥ तथापि तन्निवेदितेतरविषयकम्॥ पूर्वोदाहृतश्रुतिनारदादिवचन
प्रामाण्यात्॥ नारदेन संकल्प्यार्पितस्यैवान्नादेर्नैवेद्यस्योक्तत्वेन तत्साहचर्यात्॥ पादांबुप्रभृतेरपि संकल्प्यार्पि
तस्यैव निषेधसंभवेन पूजामात्रसंकल्पेनार्पितस्य॥ ध्यानमात्रेणार्पितस्य च निषेधासंभवाच्च लोभादेवाशैवस्य धा
रणनिषेधेन प्राणयात्रार्थं धारणभक्षणयोरशैवस्यापि धारणादिनिषेधाभावाच्च॥ कामिकेऽपीश्वरवचनमपि॥ ।
अप्रबुद्धात्माऽस्पृष्टचित्तो लोभान्मद्भुक्तं पावनं परं॥ भक्षयेन्नात्रमायाति क्षुद्रोऽप्यधममादिव॥१॥ एवंच॥ यानि सामा
न्यशिवनिर्माल्यभोजननिषेधवाक्यानि तानि शिवभक्तिवर्जितानां निवेदितेतरनिर्माल्यभक्षणनिषेधपराणि॥ य
दि तु निवेदितभक्षणनिषेधवचनमपि क्वचिदुपलभ्यते॥ तत्तूक्तश्रुत्यादिविरोधादुक्तन्यायेनोपेक्षणीयमेव॥ यत्र तु

शै॰ भू॰ शिवसंनिधानंनास्ति॥ तत्रापिभुक्तेतनविवासितेनचन्दनादिकंवागादिनाशिवायसमर्प्यैवभोक्तव्यमुक्तं।
कस्याद्यनुसारात्॥ आयतनविशेषेतुशिवभक्तिवर्जितानामपिनोभात्॥ एवंविधनिर्माल्यधारणेपिनदोषः॥
२८ तदुक्तमग्निपुराणे॥ बाणलिंगेचलेलोहेसिद्धलिंगेस्वयंभुवि॥ प्रतिमासुचसर्वासुनदोषोमाल्यधारणे॥ निर्माल्य
धारणेद्रव्यस्यर्थः॥ नचेदंनिवेदितपरमनिवेदितपरत्वेपि॥ शैवपरमशैवपरत्वेविधानयात्रामात्रसाधकधारणपरम
तिवाच्यं॥ तत्रपूर्वोक्तरीत्यादोषाप्रसक्तेरेवप्रतिप्रसवायोगात्॥ लोहेधातुमयेस्कांदे॥ अग्राह्यंशिवनिर्माल्यंप
त्रपुष्पंफलंजलं॥ शालिग्रामस्यसंसर्गात्सर्वंयातिपवित्रतां॥ १॥ शालिग्रामस्पर्शसंसर्गेनाम्॥ शालिग्रामस्यसर्वदेवात्म
कत्वेनसर्वदेवपूजाधारतयातत्रशिवपूजायांपत्रादीनामर्पणं॥ इतिलक्षणप्रकाशेस्थितं॥ कृत्यरत्नाव
ल्यांतु॥ शिवनाभिविषयकमेतदिति॥ स्थितं॥ पूजाप्रकाशोदाहृतं॥ पाद्मे॥ शालग्रामशिलालिंगेयःकरोतिम
मार्चनं॥ तेनार्चितःकार्तिकेययुगानामेकसप्ततिं॥ नतुशालिग्रामेणसहपूजितशिवायार्पणमितिभ्रमितव्यं॥ अ
दारस्वारस्यात्॥ तथाप्रवर्तितः॥ तस्मात्शिवनिर्माल्यंसर्वोत्कृष्टं॥ नकस्यापिवर्जनीयमितिसिद्धं॥ अतएव॥ नि २८
यतकमलसंख्यापरिपूरणायसमर्पितंनेत्रंनिर्माल्यभूतंविष्णुर्दधार॥ इतिपुराणेप्रसिद्धं॥ ब्रह्मादयोपिशिव

निर्माल्यं धारयंति॥ तथाच॥ भागवते चतुर्थस्कंधे दक्षं प्रतिसतीवाक्यं॥ किंवा शिवाख्यमशिवं न विदुस्त्वदन्ये॥ ब्रह्मादय
स्तमवकीर्य्यजटाः श्मशाने॥ तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्मूर्द्धभिर्दधति तच्चरणावसृष्टं॥१॥ तच्चरणादवसृष्टं
गलितं तं निर्माल्यं यन्मूर्द्धनि धारयंती तिश्रीधरः॥ यद्यपि शिवनिर्माल्यमेवभोक्तव्यं नान्यदेव निवेदितं न वा ऽनिवेदितं॥ इति
पूर्वोदाहृतस्मृत्यादिवचनात् सिद्धेचैवंविधेषु मांसमस्त्यत्र मज्जागवतादिवचांसि निषेधपराणि बहूनि उपलभ्यंते॥ त
थापि विस्तरभयात्॥ अस्मासु परेषां निबद्धदृष्ट्या संभावनानया त्वेतानि नोपन्यस्यंते॥ इत्यलं॥ यदद्भी दुग्धी के पचति विवि
धं त्वौषधिगणं तथैवान्नं वह्नीरवि रपि सुमानी हस्मकालं॥ विधियैडैते जनयति जगत्स्थावरं चरं॥ सुवर्णीयड्तः सुरन
रगणा बिभ्रतितनौ॥२॥ क्रतौ यद्रुद्रकाजामनसि दधते वा शिव बुधाय च यस्त्वं च क्रं हरि रवति बिभ्रत्त्रिभुवनं॥ तथा धत्ते
नेत्रं हरयजनसंभूतमनिशं॥ कई छे माकुं तत्परमशिवमंपर्करहितं॥ ७॥ इति श्रीमत्स्वामिसदानंदविरचिते शैव
सुधाकरे नैवेद्योत्कर्षनिरूपणं नाम एकोनविंशः किरणः॥ १९॥ अथ पसद्यो जातादि पंचब्रह्ममंत्रैर्बोधायनोक्तप्रकारे
ण पार्थिवपूजाप्रयोगः॥ तत्रादौ कृतावश्यकक्रियः स्नानादिना शुचिर्भूत्वा धृतत्रिपुंड्रुद्राक्षमालः॥ कृतसंध्यावंदना
दिनित्यक्रियः प्रयतो ब्रह्मचारी सन् स्नात्वा नदीतीरादि शं गत्वा मृदं देशे पाषाणवेणुकीटकेशास्थिवालुकादि

शै॰सु॰ दोषरहितां मृदं दृष्ट्वा॥ तत्र गंधाद्युपचारैर्भूमिं संपूज्य नत्वा॥ ईशानकोणगतां मृदं शस्त्रेणोत्कीर्य॥ अष्टांगुलां मृदम
पाकृष्य॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना॥ मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च॥ १॥ इति मंत्रेण शुद्धां तन्मृद
२५ मादाय॥ शूद्रादिस्पर्शरहितो मौनी गृहे आगत्य शुचिस्थले तां स्थापयेत्॥ कृताचमनश्चैलाजिनकुशोत्तरे स्वासने उद
ङ्मुख उपविशेत्॥ ततः पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता॥ त्वं च धारय मां देवि पवित्रं कुरु चासनं॥ २॥ इति भूमि
प्रार्थ्य॥ अपसर्पंतु ते भूता ये भूता भूमिसंस्थिताः॥ ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया॥ इति पठित्वा॥ गौरसर्षपा
न् चतुर्दिक्षु विकिरेत्॥ ततो विष्णुर्विष्णुरित्याद्येवं गुणविशेषणविशिष्टायां पुण्यतिथावित्यंते देशकालादि संकीर्त्य
मम सकलमनोरथसिद्धिदुरितक्षयद्वारा श्रीभवानीशंकरप्रीत्यर्थं अमुकसंख्याकपार्थिवलिंगानां पूजनं तंत्रेण पृथ
क् पृथग्वा करिष्ये इति संकल्पं कुर्यात्॥ यजमानस्य चेदमुकशर्मणो यजमानस्याभीष्टसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं
अमुकसंख्यया पार्थिवलिंगानां पूजनं करिष्यामीति संकल्पं कुर्यादिति॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः॥
भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः॥ इति मंत्रेण मृदश्चूर्णं कुर्यात्॥ वामदेवाय नमो ज्येष्ठाय नमः॥ श्रेष्ठाय नमो रु
द्राय नमः॥ कालाय नमः॥ कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः॥ सर्वभूतदमना

यनमो॥मनोन्मनायनमः॥इतिजलसेचनं॥ अघोरेभ्योथघोरेभ्यो घोरघोरतरेभ्यः॥सर्वेभ्यः॥सर्वसर्वेभ्योनम
स्तेअस्तुरुद्ररूपेभ्यः॥इतिसंयोजनं॥तत्पुरुषायविद्महे महादेवायधीमहि॥तन्नोरुद्रःप्रचोदयात्॥इतिपिंडीक
रणं॥ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम्॥इतिमंत्रेण
यथोक्तमेखलमखंडलिंगंलिंगानिवाविधायसद्यःसमस्ताघनाशनेतिशिरसानिधाय॥इतिवामपाणौवेदिकायांताम्र
पात्रेवाबिल्वपत्रंनिधाय॥तदुपरिसादितपुष्पंलिंगंसंस्थाप्यप्राणप्रतिष्ठांकुर्यात॥प्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरु
द्राऋषयः ऋग्यजुःसामानिछंदांसि॥प्राणाख्यादेवता॥आंबीजं॥ह्रीं शक्तिः॥क्रोंकीलकं॥पार्थिवलिंगप्रतिष्ठा
पनेविनियोगः॥ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंहंसः॥शिवस्यप्राणाशिवस्यजीवः॥शिवस्यसर्वेंद्रियाणिइहागत्यसु
खंचिरंतिष्ठंतुस्वाहा॥शिवेहागच्छेहतिष्ठममपूजांगृहाणेतिप्राणप्रतिष्ठांकृत्वा॥लिंगानांबहुत्वेप्राणप्रतिष्ठांपृथ
क्पृथक्कुर्यात्॥पूजनेविकल्पः॥तंत्रेणपृथक्पृथग्वा॥सहपुष्पोदकेनलिंगेदेवमावाहयेत्॥ॐभूःपुरुष
मावाहयामि॥ॐभुवःपुरुषमावाहयामि॥ॐभुवःपुरुषमावाहयामि॥ॐस्वःपुरुषमावाहयामि॥ॐभूर्भुवःस्वःपुरुष
मावाहयामि॥ओमायातुभगवान्महादेवइत्यावाहयेत्॥स्वामिन्सर्वजगन्नाथयावत्पूजावसानकं॥तावत्त्वंप्रीति

श्री·सु भावेन लिंगेस्मिन्संनिधिं कुरु ॥ २ ॥ इति संप्रार्थ्य ॥ स्वस्य वामभागे जलपूर्णकलशं स्थापयेत् ॥ सामग्रीं दक्षिण
भागे ॥ आपो वा इदं सर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोन्नमापोऽमृतमापः सम्राडापो विराडाप
३० स्वराडापः छंदांस्यापो ज्योतींष्यापो यजूंष्यापः सत्यमापः सर्वा देवता ॥ आपो भूर्भुवः स्वराप ओम् ॥ इत्यभि
मंत्र्य ॥ गंधाक्षतैः संपूज्य ॥ कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः ॥ मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृता
: ॥ १ ॥ कुक्षौ तु सागराः ॥ सप्त सप्तद्वीपा वसुंधरा ॥ ऋग्वेदोथ यजुर्वेदः ॥ सामवेदो ह्यथर्वणः ॥ अंगैश्च सहिताः
सर्वे कलशं तु समाश्रिताः ॥ अत्र गायत्री सावित्री शांतिः पुष्टिकरी तथा ॥ आयांतु शिवपूजार्थं दुरितक्षयकार
काः ॥ इति कलशे सर्वतीर्थान्यावाह्य ॥ तत्रस्थैर्जलैस्तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदया
त् ॥ इति सकृद्गायत्र्या स्वशरीरं पूजासंभारांश्च संप्रोक्ष्य ॥ ततो ध्यानं ॥ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्राव
तंसं ॥ रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नं ॥ पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं ॥
विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रं ॥ १ ॥ दक्षोत्संगनिषण्णकुंजरमुखं प्रेम्णा करेण स्पृशन् ॥ वामो ३०
रुस्थितवल्लभांकललितस्कंदं करेणालभन् ॥ इष्टाभीतिमनोहरं करयुगं बिभ्रत्प्रसन्नाननो ॥ भूयान्नः शारदिंदु

स्कंदरतमुंश्रेयस्करः शंकरः ॥२॥ आत्मानं रुद्ररूपं ध्यात्वा ॥ मनःकल्पितैर्गंधादिभिरन्यथैवा मनसा पुष्टाध्वना
मनः ॥ सिस्थितश्शिवं पुष्पप्रक्षेपेण लिंगे आगतं विभाव्य पूजयेत ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ॥ आ-
सनं समर्पयामि ॥ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो वनस्पतिषु यो रुद्रो विश्वा भुवनानि विवेश ॥ तस्मै रुद्राय-
नमो अस्त्व् इति यजुषा पाद्यपात्रमभिमंत्र्य कुशाग्र्या ॥ तिरः पवित्रमपआनीय ॥ पुनस्तेनैवापोऽभिमंत्र्य सह पवित्रेण
दिस्यं दर्शयित्वा ॥ भवे भवेनाति भवे भजस्वमां पाद्यं समर्पयामि ॥ पुनर्यो रुद्रो अग्नौ इति यजुषा अर्घ्यपात्रमभिमंत्र्य पुष्पा
ल्यतिरः पवित्रमपआनीय पुनस्तेनैवापोऽभिमंत्र्य सह पवित्रेण दिस्यं दर्शयित्वा ॥ भवोद्भवाय नमः ॥ अर्घ्यं समर्पयामि
पुनस्तथैवाचमनपात्रमादिस्यं दर्शयित्वा वामदेवाय नमः ॥ आचमनं समर्पयामि ॥ ज्येष्ठाय नमः मधुपर्कं समर्पये ॥ आप्यायस्व ।
समेतु ते इति ॥ पयः ॥ पृथिव्यामिति वा पयः स्नानं समर्पयामि ॥ दधिक्राव्णो अकारिषमिति दधिस्नानं समर्पया
मि ॥ घृतं मिमिक्षिरे ॥ इति घृतं ॥ घृतवान इति वा घृतस्नानं समर्पयामि ॥ मधुवातेति मधुस्नानं समर्पयामि ॥ स्वा
दुः पवस्वेति ॥ अपां रसमिति वा शर्करास्नानं समर्पयामि ॥ शुद्धोदकस्नानानि ॥ आपो हि ष्ठेत्याद्या अत्र मंत्राः पठ
नीयाः ॥ तथा सांगेन नमस्ते रुद्रीयेणाभिषेकं कुर्यात ॥ अथ व्याहृतिभिः ॥ प्रदक्षिणमुदकं परिषिच्य ॥ पवित्रं पादमू

शौ.सू. ले निधायाग्निं तर्पयति॥ भवं देवं तर्पयामि॥ शिवं देवं तर्पयामि॥ ईशानं देवं तर्पयामि॥ पशुपतिं देवं तर्पयामि॥ रुद्रं दे
वं तर्पयामि॥ उग्रं देवं तर्पयामि॥ भीमं देवं तर्पयामि॥ महांतं देवं तर्पयामि॥ अष्टभिर्मंत्रैस्तर्पणं कुर्यात्॥ ज्येष्ठाय नमः
३१ ॥ वस्त्रं समर्पयामि॥ रुद्राय नमः॥ उपवीतं समर्पयामि॥ कालाय नमः॥ गंधं समर्पयामि॥ कलविकरणाय नमः॥
अक्षतान्समर्पयामि॥ बलविकरणाय नमः॥ बिल्वपत्रादि धत्तूरादि पुष्पाणि समर्पयामि॥ बलाय नमः॥ धूपं सम
र्पयामि॥ बलप्रमथनाय नमः॥ दीपं समर्पयामि॥ ततो नैवेद्यं॥ अमृतोपस्तरणमसीति प्रतिपदं कृत्वा॥ हविरेविसृ
ष्टं सर्वस्वादुवस्तु कंदमूलफलानि प्रक्षिपेत्॥ मुहूर्तमनपेक्षमाण आसीनो हविरुद्धासयामि॥ इति नैवेद्यमुद्धास्या
ऽमृतापिधानमसीति प्रतिपदं कृत्वा॥ सर्वभूतदमनाय नमः॥ नैवेद्यं समर्पयामि॥ मनोन्मनाय नमः॥ आचमनं सम
र्पयामि॥ शंभवे नमः॥ तांबूलं समर्पयामि॥ शंभवे नमः॥ प्रदक्षिणं समर्पयामि॥ शंभवे नमः॥ नीराजनं समर्पया
मि॥ शंभवे नमः॥ नमस्कारान्समर्पयामि॥ लिंगस्य प्रागादिदिक्षु वक्ष्यमाणैर्मंत्रैरक्षतान्क्षिपेत्॥ ॐ भवाय क्षि
तिमूर्तये नमः॥ शर्वाय जलमूर्तये नमः॥ ईशानायाग्निमूर्तये नमः॥ पशुपतये वायुमूर्तये नमः॥ रुद्राय आ ३१
काशमूर्तये नमः॥ उग्राय यजमानमूर्तये नमः॥ भीमाय सोममूर्तये नमः॥ ततः प्रार्थना॥ नमः ॐकाररूपाय वे

दरूपायतेनमः॥ अलिंगलिंगरूपाय विश्वरूपायतेनमः॥१॥ नमोमोक्षप्रदेतुभ्यंनमोमाहात्मनेतथा॥
नमः शाश्वतरूपायरूपातीतायतेनमः॥२॥ त्वंमातासर्वलोकानांत्वमेवजगतःपिता॥ त्वंभ्रातात्वंसखामि
त्रंत्वंप्रियःप्रियरूपधृक्॥ ३॥ त्वंगुरुस्त्वंगतिःसाक्षीत्वंपितात्वंपितामहः॥ नमस्तेभगवन्रुद्रभास्करामि
ततेजसे॥४॥ संसारसागरोन्मग्नंमामुद्धरशिवाव्यय॥ अनेनपूजनेनत्वंवांछितार्थप्रदोभव॥५॥ दंडवत्
प्रणतोभूत्वास्तुत्वाचैवविशेषतः॥ एकाग्रःप्रयतोभूत्वामंत्रमेतदुदीरयेत्॥६॥ अंगहीनंक्रियाहीनंविधि
हीनंमहेश्वर॥ पूजितोसिमयादेवतत्क्षमस्वांबिकापते॥ ७॥ अन्यथासक्तचित्तेनक्रियाहीनेनवाविभो॥
मनोवाक्कायदुष्टेनपूजितोसित्रिलोचन॥ तत्सर्वंक्षम्यतांदेवदासेकृत्वादयांमयि॥८॥ इतिप्रार्थनांकृत्वा
॥रौद्रीभिःऋग्यजुःसामाथर्वभिश्चार्षैःस्तोत्रैःस्तुत्वायथाशक्तिपंचाक्षरमंत्रस्यजपंकुर्यात्॥ शिवपंचाक्षर
मंत्रस्यवामदेवऋषिःपङ्क्तिश्छंदः॥ शिवोदेवता॥ सदाशिवप्रीत्यर्थेजपेविनियोगः॥ अनेनजपेनशिवः
प्रीयतां॥ प्रयातुभगवान्महादेवइतिविसर्जनंकुर्यात्॥ बाणलिंगादावावाहनविसर्जनेनस्तः॥ आवाहन
विसर्जनयोः॥ पूर्वोक्तरूपत्वेतु॥ तत्रापितेस्तएवेत्युक्तंप्राक्॥ आवाहनंनजानामिनजामामिविसर्जनं॥

पूजां चैव न जानामि त्वं गतिः॥ परमेश्वर इति मंत्रं पठित्वा॥ सव्यहस्ततलेन लिंगं स्पृशेत्॥ ततः शिवनिर्णेज
नोदकं चुलुकमितं वारत्रयं पिबेत्॥ तत्र मंत्रः॥ कालमृत्युहरं पुण्यं ब्रह्महत्याविनाशनं॥ व्याधिघ्नं पुण्यपास्य
शिवनिर्णेजनोदकं॥ इति वैदिकोक्तप्रकारेण पूजापद्धतिः॥ ॥इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधा
३२ करे वैदिकोक्तपार्थिवपूजानिरूपणं नाम विंशः किरणः॥२०॥ ॥आयुरारोग्यवृद्ध्यर्थं पशुपुत्रधनाप्तये॥ ना
ममंत्रेण कर्तव्यं स्त्रीभिः पार्थिवपूजनं॥१॥ स्त्रीभिः शूद्रैश्च कर्तव्यं धर्मकामार्थसिद्धये॥ सदा श्रीपार्थिवेशस्य पूजनं ना
ममंत्रतः॥२॥ इति पाद्मे स्त्रीशूद्राणामपि पार्थिवपूजाविधानात्॥ तेषामपि नाममंत्रेण पद्धतिः॥ पूर्वोक्तरीत्या देश
कालादि संकीर्त्य श्रीपरमेश्वरप्रीत्यर्थं पार्थिवलिंगपूजनमहं करिष्ये॥ हराय नमः॥ मृदाहरणं॥ महेश्वराय नमः
संघट्टनं॥ शंभवे नमः प्रतिष्ठापनं॥ देवस्य प्राणाः जीवः सर्वेंद्रियाणि इहागत्य सुखेन चिरं तिष्ठंतु॥ ध्यायेन्नित्यं महे
शमिति देवं ध्यात्वा॥ शूलपाणये नमः॥ आवाहनं॥ पिनाकधृषे नमः पाद्यं॥ शिवाय नमः॥ इति मंत्रेणार्घ्यं आचम
नस्नानवस्त्रयज्ञोपवीतगंधपुष्पधूपदीपनैवेद्यांतं कुर्यात्॥ यद्वा॥ शिवाय नम इति नमोंतेन नाममंत्रेणैव स्त्री ३२
शूद्रैः सर्वमपि पार्थिवेश्वरपूजनं कार्यं॥ ॥इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे स्त्रीशूद्रयोः पार्थि

वधूजा नि[illegible]मामेकविंशः किरणः॥२१॥ अथैकादशी॥ एतद्व्रतं हि शैवानामविविहितमस्ति॥ तथा च शिव
गीतायां॥ [illegible]कादश्यामुपोष्यैव यः पूजयति मां निशि॥ सोमवारे विशेषेण स मे भक्तो न नश्यति॥ शिवधर्मे॥ वैष्णवो
वाथ शैवो वा कुर्यादेकादशीव्रतं॥ सौरपुराणे॥ वैष्णवो वाथ शैवो वा सौरोप्येतत्समाचरेदिति॥ नंदीपुराणे॥ एका
दश्यष्टमी चैव पक्षयोरुभयोश्चतुर्दशी॥ शिवस्य तिथयः प्रोक्ता मुनिभिः शौनकादिभिरिति॥ एतन्माहात्म्यं नारदीय
पुराणे॥ एकादशीसमुत्थेन वह्निना पातकेंधनं॥ भस्मतां याति राजेंद्र अपि जन्मशतोद्भवं॥१॥ नेदृशं पावनं लो
के मराणां॥ भूप विद्यते॥ यादृशं पद्मनाभस्य दिनं पातकहानिदं॥२॥ एकादशेंद्रियैः पापं यत्कृतं भवति द्विजो
॥ एकादश्युपवासेन तत्सर्वं विलयं व्रजेत्॥३॥ एकादशीसमं किंचित्पापत्राणं न विद्यते॥ अग्रेमोस्वर्गदा त्वेषा रा
ज्यपुत्रप्रदायिनी॥४॥ सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी॥ न गंगा न गया भूप न काशी न च पुष्करं॥ प न चै
व कौरवं क्षेत्रं न रेवा न च वेदिका॥ यमुना चंद्रभागा च तुल्या भूप हरेर्दिनात्॥५॥ चिंतामणिसमा ह्येषा अथवा द्रय
निधेः समा॥ संकल्पपादपख्या वेदवादोपमाथवा॥७॥ एकामेकादशीं वापि समुपोष्य जनार्दन॥ कामेनापि स
मभ्यर्च्य संसारान्मुक्तिमाप्नुयात्॥८॥ प्रसंगाद्वापि दंभाद्वा मोहाद्वा त्रिदशाधिप॥ एकादश्यां नरः॥ कृत्वा सर्वदुः

खात्स्तु अश्नुते॥ एणादिवत्॥ न शांखेन पिबेत्तोयं न खादेत्कूर्मसूकरौ॥ एकादश्यां न भुंजीत पक्षयोरुभयोरपि॥१०॥
रटंतीह पुराणानि भूयोभूयो वरानने॥ न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे॥११॥ नञ्युतानि नञ्युक्तानि वाक्या
 नि श्रूयंते॥ तानि किं पक्षद्वयेपि भोजनप्रतिषेधपराणि॥ उत पर्युदासद्वारा भोजनसंकल्पविधिपराणि॥ इति वे
न्निषेधा एव॥ एते भोजनस्येति न्यायविदो मन्यंते॥ न भुंजीतेति प्रधानेन विधायकप्रत्ययेन सह नञः संबंधात्॥ त
स्यागेन नञः पर्युदासलक्षणायां च गौरवात्॥ न शांखेन पिबेत्तोयं इत्यादिभिः॥ संप्रतिपन्ननिषेधैः साहचर्येणैकत्र
पठितत्वाच्च॥ नैतेषु वाक्येषु पर्युदासकारणं॥ व्रतशब्दसामानाधिकरण्यादि दृश्यते॥ पर्युदासपक्षे च॥ गृहस्थो
ब्रह्मचारी चेत्यत्र वाक्ये पक्षद्वयेप्युपवासप्रसक्तेर्गृहस्थग्रहस्थग्रहणमनुपपन्नं स्यात्॥ शुक्लामेव सदा गृही इत्यादिभि
र्वाक्यैर्वक्ष्यमाणैर्विरोधात्॥ अतो भोजनप्रतिषेधा इमे॥ न चैतादृशेषु वाक्येषु वक्ष्यमाणव्रतविधायकत्वमेका
र्थ्यार्थं॥ मूलभूतप्रकृतिकल्पनागौरवाभावार्थं च संकल्पलक्षणैवास्त्विति वाच्यं॥ फलमूलत्वेन मूलकल्पनागौ
रवस्यादोषत्वात्॥ अन्यथा निषादस्थपत्यधिकरणमुच्छिद्येत॥ येषु पुनर्वचनेषु॥ नञ्संबद्धभोजनार्थकश 
ब्दयुक्तेषु व्रतशब्दसमभिव्याहारो दृश्यते॥ तानि व्रतशब्दसामानाधिकरण्यबलात्॥ पर्युदासाश्रवणेनाभोज

नसंकल्पविधिपराणि॥ यथा॥ परमापदमापन्नो हर्षे वा समुपस्थिते॥ सूतके मृतके वापि न त्यजेद्द्वादशीव्रतं॥ सू
तके तु नरः स्नात्वा प्रणम्य मनसा हरिं॥ एकादश्यां न भुंजीत व्रतमेवं न लुप्यते॥ यानि चोपवासशब्दवंति नञ्रहित
शब्दवंतिषु तेष्वपि वचनेषु अभोजनसंकल्प एव विधीयते॥ उपवासशब्दस्य व्रतविशेषवाचित्वा व्रतशब्दस्य सं
कल्पविशेषवाचित्वात्॥ यथा॥ एकादशीमुपोषेत पक्षयोरपि॥ यथा शुक्ले तथा कृष्णे न विशेषोऽस्ति कश्चन॥
ब्रह्मवैवर्ते॥ प्रकुर्याद्वैष्णवं व्रतमित्यादि॥ तथा फलव्याहारसहितेषु॥ यदीच्छेद्धरिसायुज्यं श्रियं संततिमेव वा॥
एकादश्यां न भुंजीत पक्षयोरुभयोरपि॥ इत्यादिषु अभोजनसंकल्प एव पर्युदासवृत्त्या विधीयते॥ निषेधपरत्वे फ
लसंबंधानुपपत्तेः॥ एतानि त्रिविधानि वाक्यान्येकार्थानीति कर्तव्यताकानि॥ इतिकर्तव्यता लिख्यते॥ गृहीत्वौदुं
बरं पात्रं वारिपूर्णमुदङ्मुखः॥ उपवासं तु गृह्णीयाद्यथा संकल्पयेद्बुधः॥ १॥ इति वाराहपुराणे॥ तत्रौदुंबरं ताम्रं तेन घटि
तमौदुंबरं॥ यथा संकल्पयेदित्यस्य तथोक्तिरिति विशेषः॥ अयं संकल्पस्तु दशम्यां रात्रौ कर्तव्यः॥ तदुक्तं ब्रह्मवैवर्ते॥ द
शमे हरिदिने सम्यग्विधाय नियमं निशि॥ दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतं॥ संकल्पमंत्रश्च विष्णुस्मृतावुक्तः॥ एका
दश्यां निराहारः स्थित्वाहमपरेऽहनि॥ भोक्ष्येऽहं पुंडरीकाक्ष शरणं मे भवाच्युत॥ इत्युच्चार्य ततो विद्वान् पुष्पांजलिं तथार्पये

ऐ॰सु॰ त्॥ ॐ वादीनां मुहे मक्षो सोरशुरावो॥ सावित्र्याप्ययवानाम्नां संकल्पं तु समाचरेत्॥ सावित्र्यां शिवगायत्र्या॥ शिव
गायत्री॥ ॐ तत्पुरुषायेति मापुरुस्तार्याद्यास्तुक्त्वा अपरेद्युर्मितो ऽस्म्याभीति वदेत्॥ यष्ट्या॥ शिव नामो ऽच्चार्य तथा न दे
२४ त्॥ पुंडरीकाक्षो ऽच्युतस्थाने पार्वतीनाथ इत्थं रस्त्विति वाकहः कार्यः॥ फलाविन्न लक्षणे मिराहार रद्वस्यपो ऽद्य फलाहा
र द्वन्द्व हमिलपो ऽस्म्याम्लमिति वोहः कार्यः॥ एवं संकल्पप्रयोगेपि॥ कृष्णैकादश्यां तु॥ बोधिन्याकर्षशाम्भिन्याः शाकु
निष्कामैरवैष्णव गृहस्थैर्मोपवसनीया॥ न विंध्यासरे॥ पुत्रिण्या गृहस्थैः कर्त्तव्या भोगसंतानवर्द्धिनी॥ मुमुक्षुभि
स्तथा कृष्णा तेनवते नोपदेशिना॥ इति युधिष्ठिरं प्रति कृष्णवाक्यं॥ ते॥ तुल्यं॥ गोभिलः॥ एकादश्यां न भुंजीत पक्षयो
रुभयोरपि॥ वनस्थयतिधर्मोयं शुक्लामेव सदा गृही इत्यादिवाक्ये गृहस्थानां शुक्लायामेव व्रतविधानात्॥ कृ
ष्णा॥ वनस्थयतिधर्म इति पदद्वयदर्शनादिदं वाक्यद्वयं व्रतविषयकमेव॥ निषेधपालनं काम्यव्रतं च सर्वेषु
ष्णायां सर्वगृहीणां संभवत्येव॥ निषेधानां विशेषानपेक्षत्वेन न यत्यादिषु॥ उपसंहारायोग्यत्वेन गृहस्थेष्वपि पुत्र
वित्संभवात्॥ पुत्रवांश्च समार्यश्च स्वबंधुयुक्तस्तथैव च॥ उभयोः पक्षयोः काम्यं व्रतं कुर्यात्तु वैष्णवमिति नारदो २४
क्तेश्च॥ न विरोध्य॥ यथा शुक्ला तथा कृष्णा यथा कृष्णा तथेतरा॥ तुल्ये ते मन्यते यस्तु स हि वैष्णव उच्यते॥ नारदी

ये॥ मित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः॥ पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणं॥ ७॥ शयनाबोधिनीमध्ये
याकृष्णैकादशी भवेत्॥ सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन॥ इति वचने॥ नान्या कृष्णेत्यनुवादः प्राप्तेर
भावात्॥ एकादश्यां च कृष्णायां संक्रांतौ च रवौ तथा॥ पारणं चोपवासं च न कुर्यात्पुत्रवान्गृही॥ १॥ इति वचनं॥
शयनीबोधिनीमध्यवर्तिकृष्णैकादशी पुत्रवतो गृहस्थस्य उपवासनिषेधपरं॥ अन्यथा गृहस्थस्य शुक्ला
यामेवोपवासविधानेन कृष्णाया अनुपवासप्राप्तेरेवाभावात्तद्वैयर्थ्यं स्यात्॥ इदं त्वेषु वाक्येषु रव्यादावुपवासस्य
पारणस्य निषेधो रव्यादिवारनिमित्तकस्तु तस्य तत्पूर्वदिनकृतव्रतांगपारणस्य च तु संक्रांतिरविवारयोर्यैका
दशी॥ तद्व्रतस्नातयोरन्होरेकादशीव्रतपारणस्य च॥ भृगुभानुदिनोपेता सर्वसंक्रांतिसंयुता॥ एकादशी सदो
पोष्या पुत्रपौत्रविवर्द्धिनी इति विष्णुधर्मवाक्यविरोधात्॥ भानुवारादौ तु तेतु अमावास्याद्वादशी च संक्रांतिश्च
विशेषतः॥ एताः प्रशस्तास्तिथयो भानुवारस्तथैव च॥ अत्र स्नानं जपो होमस्तीर्थदेवादिपूजनं॥ उपवासस्तथा
दानमेकैकं पावनं स्मृतं इति मानं॥ पारणं तु॥ सप्तवारान्तु पोष्यैवं सप्तधा संयतेंद्रियः॥ सप्तजन्मकृतात्पा
पात्तत्क्षणादेव मनुपतीर्तिस्त्रामि वारव्रतां गम्यार॥ बोनातं॥ निर्स्यहृयोरयनयोर्नित्यं विषुवतोर्द्वयोः॥ वक्तार्कयो
मे

श्रौ.सु ग्रहणयोर्व्यतीपातेषु पर्वसु ॥ अहोरात्रोषितः स्नानं श्राद्धं दानं तथा जपं ॥ यः करोति प्रसन्नात्मा तस्य स्यादक्षयं
व्रतदिति ॥ संक्रांतिपूर्वदिनवृत्तांगतया संक्रांतौ प्राप्तउपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् ॥ नतुब्रह्मस्युपवासे
२५ नउपवासफलं लभेत् ॥ निषेधोल्लंघनप्रयुक्तप्रत्यवायपरिहाररूपफलं ॥ भक्ष्यकल्पनायां ॥ वायुपुराणे ॥
नक्तं हविष्यान्नमनोदनं च फलं तिलाः क्षीरमथांबु चाज्यं ॥ यत्पंचगव्यं यदि वापि वायुः ॥ प्रशस्तमत्रोत्तरमुत्त
रंयत् ॥ २ ॥ अशक्तावपीदमेव बोध्यं ॥ मार्कंडेयस्तु नक्तांतरमप्याह ॥ एकभक्तेन नक्तेन तथैवायाचितेन च ॥
उपवासेन दानेन निर्द्वादशिको भवेत् ॥ इति हविष्यं तु ॥ हैमंतिकं सितास्विन्नं धान्यं मुद्गास्तिला यवाः ॥ कलाय
कंगुनीवारा वास्तूकं हिलमोचिका ॥ षष्टिकाः कालशाकं च मूलकं केमुकेतरत् ॥ लवणे सैंधवसामुद्रे गव्ये
च दधिसर्पिषी ॥ पयोनुद्धृतसारं च पनसाम्रहरीतकी ॥ तिंतिडी जीरकं चैव नागरंगजपिप्पली ॥ अप्रैतैलवर्क्कंम
नयोर्हविष्यान्नं प्रचक्षत इति बोध्यं ॥ अन्यत्र ॥ नारिकेरफलं चैव कदलीजंबलीतथा ॥ आम्रमामलं चैव पं
नसं च हरीतकी ॥ वृत्तांतरे ॥ प्रशस्तं च हविष्यं च क्षते बुधा इति ॥ इदं चाष्टमासूर्ध्वमाः शीतेर्वर्षाद्बुस चार्यादिनि २५
: सर्वैकार्य्यं ॥ तथा च नविष्ये ॥ अष्टवर्षाधिको मर्त्यो ह्यशीतेर्न्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपीति

गृहस्थस्यकृष्णैकादश्यांव्रतनिषेधस्योक्तत्वात॥ मस्योगृहस्थातिरिक्तः॥ गृहस्थोब्रह्मचारीवयोःनश्रुत
पश्चरेत॥ प्राणाग्निहोत्रलोपेनअवकीर्णीभवतुसः॥ इतिवचस्त्वनिरंतरोपवासनिषेधकमित्यन्यत्रविस्तरः॥
आहिताग्निरनड्वांश्चब्रह्मचारीव्रतेत्रयः॥ अश्नंतएवसिध्यंतिनैषांसिद्धिरनश्नतामित्यापस्तंबवचनंतु॥ अग्निहो
त्रादिनिरोधकाग्निकजनकोपवासनिषेधकमिति॥ उचितमेवचैतत॥ यत्तेषांश्रौतानुष्ठायिनांनित्यस्याप्यस्य
स्मार्त्तस्यानुकल्पादिनानिर्वाहणं॥ तत्त्वांव्रतेनदौर्बल्यसंभावनायां॥ उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह॥ उपवासः
सविज्ञेयोनोपवासस्तुलंघनं॥ पापेभ्योव्रतांगतयानिषिद्धेभ्यउपावृत्तस्य॥ गुणैर्हरिहरस्मरणनामकीर्तनार्चनैः स
हवासोःवस्थानमहोरात्रंसउपवासः॥ सर्वभोगविवर्जितोज्ञेयइत्यर्थः॥ तस्मातइतरसत्कर्मलोपोनभावः॥ तदर्थंन
स्नानादिरनुकल्पःकार्यः॥ असत्यंभाषणंद्यूतंदिवास्वप्नंचमैथुनं॥ एकादश्यांनकुर्वीतउपवासपरोनरः॥ पतितंभ
पाषंडिसंभाषानृतस्तेयादिकंवर्जयेदिति॥ तथा॥ असकृज्जलपानाच्चतांबूलस्यचभक्षणात॥ उपवासोविनश्येत
दिवास्वापाच्चमैथुनात॥ ब्रह्मचर्यंतथाशौचंसत्यमामिषवर्जनं॥ व्रतेष्वेतानिचत्वारिवरिष्ठानीतिनिश्चयः॥ आमिषं
मांसं॥ तस्यवर्जनंपारणेऽपि॥ उपवासदिनेप्राप्त्यभावात॥ यद्वा॥ आमिषंइतिपानीयंगोवर्ज्यक्षीरमामिषं॥ मसूर

रमामिषंतस्यैफलेजंबीरमामिषं॥ आमिषंशुक्तिकाचूर्णमामिषंमहिषीपयः॥ आमिषंदत्तिपानीयमारनालंतथामि
षमिति॥ मत्स्यंतरोदात्तमामिषंग्राह्यं॥ तन्नु॥ एकादश्यांनिषिद्धं॥ स्त्रीणांतुप्रेक्षणात्॥ स्पर्शात्ताभिःसंकथनादपि॥
निःस्पंदते ब्रह्मचर्यंनदारेष्वृतुसंगमात्॥ नावसहितेनचैतस्मात्स्त्रीणांप्रेक्षणादिभिः ब्रह्मचर्यंनिःस्पंदते॥ अत्रापतीत्य
३६ भिप्रायः॥ उपवासेतथाश्राद्धेनकुर्याद्दंतधावनं॥ दंतानांकाष्ठसंयोगोहंतिसप्तकुलानिच॥ दंतशोधनमत्रनिषि-
ध्यते॥ येनकेनचित्काष्ठग्रहणंनिंदार्थवादगतमविवक्षितं॥ निषेधस्यनिवृत्तिफलत्वेनविशेषस्यानाकांक्षितत्वात्
॥ अक्ताः शर्कराउपदधातीतिविधुद्देशस्य॥ पुनर्विशेषमनुपादायसामान्यानुष्ठानानुपपत्तेराकांक्षितोवि
शेषतेजोवैघृतमितिवाक्यशेषगतोगृह्यते॥ अन्येतु॥ अलाभेवानिषेधेवाकाष्ठानांदंतधावनं॥ पर्णादिनावि
शुद्धेनजिह्वोल्लेखः सदैवचेति॥ पैठीनसिवचनात्॥ लाभे॥ दंतकाष्ठानांनिषिद्धायांतथातिथौ॥ अपांद्वादशगंडू-
षैर्विदध्याद्दंतधावनं॥ इतिव्यासवचनाच्चजिह्वोल्लेखनदंतशोधनेकार्ये॥ इत्यर्थवादगतोपिविशेषोविवक्षि-
तइत्याहुस्तद्वन्न॥ जिह्वोल्लेखनस्यदंतधावनशब्दाभावाद्गौणोत्रदंतधावनव्यवहारः॥ ५॥ पादग्रहणे॥ सर्वगंडूषाणां २६
मुखांतरगतसर्वावयवशोधकत्वेनात्रदंतधावनपदप्रयोगेपिदंतधावनमात्रवाचकेएवलोकेदंतधावनेव्यव

हारादेस्तन्निषेधादुपसंहारे वानुष्ठानाचारणात्काष्ठेतरेण निषिद्धचूर्णादिना पत्रेण वा दंतमार्जनमकार्यमेव॥ यदि
तु पैठीनसिवाक्ये दंतधावनशब्दस्य मुख्यार्थत्वं चशब्दस्य समुच्चयार्थकत्वं तर्हि अन्योक्रम एव वरम्॥ यत्तु॥ स्त्रिया
इति प्रक्रम्य॥ पुष्पालंकारवस्त्राणि धूपधूपानुलेपनं॥ उपवासेन दुष्यंति दंतधावनमंजनं॥ इति व्यासोक्तं॥ तत्सभ
र्तृकाणां भर्तृसमीपवर्तिनीनां वनितानां वेदितव्यं॥ स्मृत्यंतरे च॥ नेत्रांजनं सतांबूलं सिंदूरं रक्तवाससी॥ विभूषा
सोपवासापि सर्वदा भर्तृवृद्धये॥ अत्र काम्योपवासवाक्येषु॥ बहुविधाः नियमाः दृश्यंते॥ ते च विस्तरभयान्न लि
ख्यंते॥ इत्यस्यतोऽवसेयाः॥ ते च काम्यकर्मस्वावश्यमपेक्षिताः॥ तत्र सर्वांगोपसंहारनियमात्॥ नित्यकर्मणि
तु यथाशक्ति कुर्यात् तथा कुर्यादिति॥ इति विज्ञाय कुर्वीत तावद्रूपमेकादशीव्रतं॥ विशेषनियमाशक्तो होरात्रं भुंजि
वर्जितः॥ २॥ इति माधवीये॥ ब्रह्मवैवर्तात्॥ किंच॥ प्रधानस्योपवासस्याप्यसामर्थ्ये यदैकभक्तादीनि विधीयंते
॥ तदेतिकर्तव्यतासु का कथा॥ तथा मार्कंडेयः॥ एकभक्तेन नक्तेन तथैवायाचितेन च॥ उपवासेन दानेन न नि
र्द्वादशिको भवेत्॥ स्मृत्यंतरे च॥ उपवासेष्वशक्तानामशीतेरूर्ध्वजीविनां॥ एकभक्तादिकं कार्यमाह बौधायनो
मुनिः॥ २॥ एकभक्तादिकमुक्तं॥ अत्राप्यशक्तावनुकल्पमाह॥ कात्यायनः॥ पितृमातृभ्रातुरर्थे आचार्यार्थे विशे

नि॰सु॰ षतः॥ उपवासं प्रकुर्वाणः पुण्यं ज्ञातनुरुं लभेत्॥२॥ यमुद्दिश्य कृतः॥ सोपि संपूर्णफलमाप्नुयात्॥ इत्यादि व्र
ति निषेध्यौ स्मृतौ तैयाः॥ एवं॥ कांस्यं मांसं मसूरं च क्षौद्रं चानृतभाषणं॥ पुनर्भोजनमत्याम्रादशम्यां परिवर्जये
त्॥ इति स्कांदोक्तं॥ कांस्यं मांसं मसूरां क्षौद्रं तैलं वितथभाषणं॥ व्यायामं च प्रवासं च मैथुनं तिलपिष्टं मसूरं च द्वा
३१ दश्यादिषु वर्जयेदिति मात्स्योक्तं॥ अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः॥ अवनीतल्पशयनाः प्रियासंगवि
वर्जिताः इति दशमीकृत्यनारदीयोक्तं॥ दशम्यामेकभक्तं तु कुर्वीत नियतेंद्रियः॥ आचम्य दंतकाष्ठं तु खादे
द्दनदनंतरं॥ इत्यादिस्मृत्यंतरोक्तं च नियमजातं काम्यव्रतपरमेव॥ हवींदाहृतवाक्यात्॥ सायमाद्यंतयोरह्नोः सा
यं प्रातश्च मध्यमे॥ उपवासफलं प्रेप्सुर्जह्याद्भक्त चतुष्टयं॥ अथ नित्योपवासी चेत्सायं प्रातर्भुजिक्रियां॥ वर्जयेन्म
तिमान्विप्रः संप्राप्ते हरिवासरे॥ इति विष्णुरहस्यवचनाच्च॥ भोजनप्रतिषेधमात्रे तु भोजनवर्जनमात्रमिति कर्म
व्यताप्यस्यं॥ एतावानेव हि व्रतनिषेधपरिपालनयोर्विशेषः॥ यद्व्रते सत्यां श्रद्धायां नियमपरिपालनं॥ इतरत्र नेति॥
अत एव कृताकृतगृहस्थानां व्रतनिषेधविधिनुजघ्नानरूपनिषेधपरिपालनप्रसक्तोपवासनिषेधे तु किं विरुद्धं स्यात् ३१
स्यैव हि तिसंगतं॥ अत एवान्नमाश्रित्य पापानि तिष्ठंति॥ निनिंदावा च गतास्तत्राद्धोऽद्यमीयपरे न पचेदन्नमात्मन इति वत्॥

अयं च निषेधः॥ कलंजभक्षणादिनिषेधवन्नित्य एव॥ व्रतं तु संयोगपृथक्त्वन्यायेन नित्यं काम्यं च॥ तत्रोभयोरे
कप्रयुक्तस्य निषेधस्य व्रतानुष्ठानेनैव सिद्धिः॥ पूर्वं तिथिग्रहणनियामकानां वाक्यानां विहितकर्मविशेषविषयक
त्वदर्शनेन व्रतमात्रविषयत्वात्॥ निषेधमात्रपरिपालनात्मिकायां भोजननिवृत्तौ न तेषां प्रवृत्तिः॥ किंतु॥ यावत्येका
दशी तावत्यां भोक्तव्यं॥ तिथिमात्रसंबंधेन एकादश्यां न भुंजीतेत्यादिनिषेधप्रवृत्तेः॥ निषेधस्य निवृत्त्यात्मा॥ काल
मात्रमपेक्षते॥ इति देवलोक्तेश्च॥ निर्णयसिंधौ तु॥ दशम्यां एकादशी वृद्धौ व्रतेपि एकादशीमारभ्य न भोक्तव्यं देवल
वचनादेवेत्युक्तं॥ श्राद्धे तु॥ अवघ्राणं कर्तव्यं॥ मातापित्रोः क्षयेप्राप्ते भवेदेकादशी यदा॥ अभ्यर्च्य पितृदेवांश्च
आजिघ्रेत् पितृसेवितं॥१॥ उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्॥ उपवासं तदा कुर्यादाघ्राय पितृसेवितं॥२
॥ इति वचनाभ्यां॥ अत्र व्रतलोपे प्रायश्चित्तादिकमन्यत्र द्रष्टव्यं॥ कायिकादिनियमरूपांगलोपे तु॥ तत्तारतम्ये
न तस्याप्रक्षिप्तार्थसकृदसकृद्वेतन्मंत्रजपः॥ यथाह विष्णुधर्मेषु॥ शारीरमंतःकरणोपघातं वाचश्च विष्णुर्भगवानम
शेषं॥ शमं नयत्वस्तु ममेह शर्म पायादनंतो हृदि संनिविष्टः॥१॥ अंतःशुद्धिं बहिःशुद्धिं शुद्धःशुद्धो धर्मनयोच्युतः॥ सकरो
त्वमलेतस्मिन् शुचिरेवास्मि सर्वदा॥२॥ वासोपधाता नमघोवोधांश्च भगवानजः॥ शमं नयत्वमेयात्मा विष्णुः क्षेत्रसि

ति·सु षतः॥ उपवासं च कुर्वाणः पुण्यं ज्ञातं तुल्यं लभेत्॥२॥ यमुद्दिश्य कृतः॥ सोपि संपूर्णं फलमाप्नुयात्॥ इत्यादि व
ति निषेध्यो ऽन्यतो ज्ञेयाः॥ एवं॥ कांस्यं मांसं मसूरं च क्षौद्रं चानृतभाषणं॥ पुनर्भोजनमत्याशं द्वाम्यां परिवर्जये
त्॥ इति स्कांदोक्तेः॥ कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणं॥ व्यायामं च प्रवासं च मैथुनं तिलपिष्टं मसूरं च द्वा
२१ दश्यादिषु वर्जयेदिति मात्स्योक्तेः॥ अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः॥ अवनीतल्पशयनाः प्रियासंगवि
वर्जिताः इति ब्राह्मीव्रतस्य नारदीयोक्तेः॥ दशम्यामेकभक्तं तु कुर्वीत नियतेंद्रियः॥ आचम्य दंतकाष्ठं तु खादि
दं ततः परं॥ इत्यादिस्मृत्यंतरोक्तं च नियमजातं काम्यव्रतपरमेव॥ इवोदाहृतवाक्यात्॥ सायमाद्यंतयोरह्नोः सा
यं प्रातश्च मध्यमे॥ उपवासफलप्रेप्सुर्जह्याद्भक्तचतुष्टयं॥ अथ नित्योपवासी चेत्सायं प्रातर्भुजिक्रियां॥ वर्जयेन्म
तिमान् विप्रः संप्राप्ते हरिवासरे॥ इति विष्णुरहस्यवचनाच्च॥ भोजनप्रतिषेधमात्रं तु भोजनवर्जनमात्रमिति कर्त
व्यतामस्त्यं॥ एतावानेव हि व्रतनिषेधपरिपालनस्याविर्भावः॥ यद्व्रते सत्यां श्रद्धायां नियमपरिपालनं॥ इतरत्र नेति॥
अनन्यव्रतमाकांक्ष गृहस्थानां व्रतनिषेधेऽपि भुजिषा न रूपनिषेधपरिपालनप्रसक्तो उपवासनिषेधे तु किं विद्धत्वं च २१
स्यैवेति संगतं॥ अत एवान्नमाक्षिप्य निक्षिपंती निर्निदा वा गतोऽन्नशाद्धोऽद्यमीयपरो न पचेदन्नमात्मन इति वत्॥

अयं च निषेधः॥ कलंजभक्षणादिनिषेधवन्नित्य एव॥ व्रतं तु संयोगपृथक्त्वन्यायेन नित्यं काम्यं च॥ तत्रोभयोरे
कत्र प्रसक्त्या निषेधस्य व्रतानुष्ठानेनैव सिद्धिः॥ पूर्वतिथिग्रहणनियामकानां वाक्यानां विहितकर्मविशेषविषयक
त्वदर्शनेन व्रतमात्रविषयत्वात्॥ निषेधमात्रपरिपालनात्मिकायां भोजननिवृत्तौ न तेषां प्रवृत्तिः॥ किंतु॥ यावत्सैका
दशी तावत्तस्यां न भोक्तव्यं॥ तिथिमात्रसंबंधेन एकादश्यां न भुंजीत इत्यादिनिषेधप्रवृत्तेः॥ निषेधस्तु निवृत्त्यात्मा॥ काल
मात्रमपेक्षते॥ इति देवलोक्तेश्च॥ निर्णयसिंधौ तु॥ दशम्यां एकादशीवृद्धौ व्रतेपि एकादशीमारभ्य न भोक्तव्यं देवला
दिवचनादेवेत्युक्तं॥ श्राद्धे तु॥ अवघ्राणं कर्तव्यं॥ मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा॥ अभ्यर्च्य पितृदेवांश्च
आजिघ्रेत्पितृसेवितं॥१॥ उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्॥ उपवासं तदा कुर्यादाघ्राय पितृसेवितं॥२
॥इति वचनाभ्यां॥ अत्र व्रतलोपे प्राजापत्यादिकमन्यत्र द्रष्टव्यं॥ कायिकादिनियमरूपांगलोपे तु॥ तत्तारतम्ये
न तत्प्रायश्चित्तार्थं सकृदसकृद्वैतन्मंत्रजपः॥ यथाह विष्णुधर्मेषु॥ शारीरमंतःकरणोपघातं वाचश्च विष्णुर्भगवान
शेषं॥ शमं नयत्वस्तु ममेह शर्मप्रायादनंतो हृदि संनिविष्टः॥१॥ अंतःशुद्धिं बहिःशुद्धिं शुद्धो धर्मनयोच्युतः॥ सकरो
त्वमलेतस्मिन्प्रविरेकास्मि सर्वदा॥२॥ वाचोपधाता नमघोघो ध्वंसभगवानजः॥ शमं नयत्वमेयात्मा विष्णुः क्षतसि

| | | |
|---|---|---|
| चं | १० | ६० |
| मं | ११ | ६० |
| बु | ११ | १ |
| बृ | १२ | २ |

शै०५ अत्र बुधे उपवासः इत्येके॥ सोमे इत्यन्ये॥ स्कांदे॥ पूर्णाप्येकादशी त्याज्या वर्द्धते द्वितयं यदि॥ तथा
॥ अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि॥ २॥ भृगुनारदौ॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा
३९ ॥ तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि॥ परतस्त्रयोदशीपारणम्॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा
॥ सर्वैरेवोत्तरा कार्या परतो द्वादशी यदी ति च नारदः॥ ३॥ नन्वेतादृशानि वेधविषयाणीति वाच्यं॥
विनिगमकाभावात्॥ नहि वेधवाक्यानां विद्धात्यागवत्॥ शुद्धवृद्धात्यागेऽप्येतादृशवाक्यातिरिक्तं प्रमाणमस्ति॥ येन त
देकार्थत्वार्थमीदृशवाक्यान्यपि तद्विषयाणि स्युरित्येके॥ अन्ये त्वेतेषु वाक्येषु पूर्णत्वं च सूर्योदयादारभ्य प्रवर्त्तमान
त्वं॥ न त्वरुणोदयादारभ्य प्रवर्त्तमानत्वं॥ अप्रसिद्धत्वात्॥ ० ॥ १॥ ० ॥ अरुणोदयवेधवाक्यानां वेधविष
ये उपसंहारस्य दर्शितत्वेन सामान्यशास्त्रार्थव्यवस्थापकत्वानुपपत्तेश्चेति वेधवाक्यानीयं विद्धेव॥ इति दशमी
शेषसंयुक्तेति गरुडवचनेनेमानि वचनान्येकार्थकानीति स्मार्त्तानां पूर्वत्यागे मानाभावः॥ न चैवमेषां वैयर्थ्यं
॥ ग्रंथांतरस्थस्य ग्रंथांतरस्थेनावैयर्थ्यात्॥ उपसंहारकेणोपसंह्रियमाणानां गतार्थत्वेप्यदोषाच्च॥ एतदेक २९
वाक्यतयैवाविद्धापि चेति स्कांदवाक्यमपि सूर्योदये विद्धायां वेधविषयम्॥ अत एवोदाहरिष्यामः॥ पुनः

प्रभातसमये इत्यादिवसिष्ठवाक्ये ॥ परतो द्वादशी न चेदिति द्वितीयश्लोकद्वितीयपादः संगच्छते ॥ नो चे-
त्परतो द्वादश्यां सत्यामपि ॥ तेषां परस्यैव व्रतस्य सत्त्वेनायं पादो न संगच्छेत ॥ इति स्मार्तैः पूर्वैव पोष्या ॥ सामा-
न्यवाक्ये पद्म इत्याहुः ॥ ॥ अथाधिकानधिकद्वादशी कार्यथा ॥ गृहिणां मोमे ॥ इतरेषां विधवानां च बुधैरुप-

| | | |
|---|---|---|
| ३ | १० | ९ |
| ८ | ११ | ६० |
| ७ | १२ | १ |
| ६ | १३ | ५५ |

वासः ॥ नारदः संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी द्वादश्यां लंघनं कार्यं त्रयोदश्यां तु पारणं ॥ स्कंदे ॥
प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयुता ॥ द्वादश्यां तु तथा तात दृश्यते पुनरेव च ॥ १ ॥ पूर्वा कार्या गृहस्थै-
श्च यतिभिश्चोत्तरा विभो इति ॥ सर्वैरेवोत्तरा कार्या इत्युदाहृतवाक्ये सर्वपदोपादानादुभयाधिक्ये
॥ ॥ ॥ ॥ सकामानां नानेन वाक्येन पूर्वैकादशीव्रतविधानं ॥ अत्र गृहस्थपदं यतिपदं स-
कामनिष्कामपरे ॥ अत एव निष्कामस्तु गृही कुर्यादुत्तरैकादशीव्रतं ॥ प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तम
॥ २ ॥ इति स्कांदे ॥ एवं निष्कामगृहिणो वि उत्तरत्रोपवासो विहितः ॥ एवं च वनस्थादेरपि संग्रहो भवति ॥ अत ए-
व ॥ पुनः प्रभातसमये घटिकैकाथ वा भवेत ॥ अत्रोपवासो विहितो वनस्थस्य यतेस्तथा ॥ १ ॥ विधवाया अतत्वे-
व परतो द्वादशी न चेत ॥ इति [illegible] ॥ इदं त्रास्कांदादिवाक्यैकवाक्यतया संपूर्णैकादशी यत्र द्वादश्यामित्यु-

क्तं नारदवचनमपि निष्कामपरं॥ यद्वा॥ नारदवचनमुनयाधिक्यपरं॥ उदाहृतस्कांदादिवाक्यैकवाक्यत्व
लाभात्॥ ईदृशबहुविधवचनानुरोधादेव तु॥ एकादशी विद्धा चेत्सुस्थे कृष्णे विशेषतः॥ उत्तरां तु यतिः
कुर्यात्पूर्वामेव सदा गृही॥ इति स्कांदवाक्ये निष्कामपदं निर्गतीति विष्णुप्रीत्यतिरिक्तः कामो येषामिति व्युत्पत्त्या वैष्ण
५० वविषयं॥ वैष्णवगृहस्थस्यापि गृहस्थत्वेन स्कांदादिवाक्यैः॥ पूर्वव्रतप्राप्तौ पूर्वमुत्तरविधानं संगच्छते॥ एवं च गृ
हस्थपदयतिपदयोर्द्वयोर्न लक्षणा॥ एतदनुसारेणैवेतरवचनव्यवस्थापि बोध्या॥ एवं च वसिष्ठवाक्यस्थपूर्वा
दिपदानि वैष्णवपराणीत्यपि केचित्॥ विष्णुप्रीतिकामैः स्मार्तैस्तु द्वे तिथी उपोष्ये॥ तदाह वृद्धवसिष्ठः॥ संपूर्णैका
दशी यत्र प्रभाते पुनरेव सा॥ लुप्यते द्वादशी तत्र उपवासः कथं भवेत्॥१॥ उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्प
रैः॥ स्कांदे तु॥ संपूर्णैकादशी यत्र प्रभाते पुनरेव सा॥ त्रयोदशी उषःकाले उपोष्या तत्र का भवेत्॥ उपोष्ये द्वे ति
थी तत्र विष्णुप्रीणनतत्परैरित्यत्र उषःकालत्रयं द्वादश्या आधिक्योपलक्षकः॥ अत्र एकाधिकारिकत्वे
पि वाचनिकी व्रतावृत्तिः॥ अत एवेदृशवचनानां साफल्यं एतेन सकामनिष्कामयोः॥ पृथक्व्रतविधायकभि ५०
न्नाधिकारिकं वचनांतरैकवाक्यत्वलाभात्॥ अन्यथा॥ आहृतेस्योगादिति प्रत्युक्तं॥ शुद्धानधिकाऽधि

| | | | |
|---|---|---|---|
| वे | १० | २० | ५८ |
| मं | ११ | ५६ | ६० |
| बु | १२ | ५० | |
| बृ | १२ | २ | |

कद्वादशीकार्यथा॥ ॥भौमेउपवासः॥ नारदः॥ न चेदेकादशी विष्णोर्द्वादशी परतः स्थिता॥
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदमिति विष्णुर्द्वादशी परतस्त्रयोदश्यां॥ अत्र चतुर्थपादे ऽर्थवादः॥
अत एव स्कांदे॥ शुद्धा यदा समा हीना समा हीनाधिकोत्तरा॥ एकादशीमुपवसेत्तन्न शुद्धां वैष्णवीमपि॥
इति सामान्यतो विधिनिषेधौ संगच्छेते॥ उत्तरा द्वादशी॥ अत एव॥ अविद्धापि चेति स्कांदवचनं॥
वैष्णवपरं॥ तादृशवाक्यैकवाक्यतालाभाच्च॥ एवं॥ एकादशी भवेत्पूर्णा परतो द्वादशी यदि॥ तदा ह्येकाद-
शीं त्यक्त्वा द्वादशीं समुपोषयेदित्यादिवाक्यान्यपि॥ संपूर्णैकादशी त्याज्या परतो द्वादशी यदि॥ उपोष्या द्वादशी
शुद्धा द्वादश्यामेव पारणं॥ २॥ इति भागवततंत्रपठितत्वाद्वैष्णवविषयमेव॥ अत एव न चेदेकादशी विष्णावि-
त्युदाहृतवाक्यविरोधो न॥ एवमन्यान्यपि॥ एकादशीशुद्धत्वे शुद्धद्वादशीव्रतविधायकानि वाक्यानि वैष्णवपर-
त्वेन व्याख्येयानि॥ यत्तु॥ पृथ्वीचंद्रोदये बृहन्नारदीये॥ संपूर्णैकादशी शुद्धा द्वादश्यां नैव किंचन॥ द्वादशी च त्र-
योदश्यामस्ति तत्र कथं भवेत्॥ पूर्वा गृहस्थैः कार्या स्यादुत्तरा यतिभिः स्थितिरिति॥ तत्तु अनाकरत्वादनादेयं॥
॥ शुद्धामधिकानधिकद्वादशीकार्यथा॥ ॥भौमेउपवासो संदेहात्॥ शुद्धा यदा समेति स्कांदाच्च॥ विद्धाधिका

| | | | |
|---|---|---|---|
| चं | १० | ५६ | |
| मं | ११ | ५९ | घ॰ २० |
| बु | १२ | २० | ५८ |
| बृ | १३ | ५५ | |

रै॰सु॰ धिकद्वादशी कार्या॥ सर्वेषां सोमे उपवासः॥ कण्वः॥ उदयोपरि विद्धा तु दशम्यैकादशी तिथिः॥ दान
वेभ्यः॥ प्रीणनार्थं दैत्यवान्याकृतासनः॥२॥ उदयः सूर्योदयः॥ उदयपदेन झटिति उपस्थितेः॥ दशम्याः
४१ अंतमादाय यद्गोदेति दिवाकरः॥ तेन स्पृष्टं हरिदिनं दत्तं जंभासुरस्य तु॥ इति स्मृत्यंतराच्च॥ इमे वाक्ये स्मा
र्तविषये एव॥ वैष्णवानां अरुणोदयवेधनिषेधावेश प्राप्तः॥ सामान्यवेधनिषेधवाक्यान्यपि वैष्णवे
षु दस्मार्तेष्वपि प्रवर्तंत एव॥ विनिगमनाविरहात्॥ ॥ विद्धाधिकानधिकद्वादशी कार्या॥ ॥
अत्र गृहिणां सोमे उपवासः॥ गृहिणां तु नोपवासः॥ किंतु सोमेन नक्तं॥ पद्मपुराणे॥ द्वादशी मिश्रि
ता कार्या सर्वत्रैकादशी तिथिः॥ द्वादशी च त्रयोदश्यां विद्यते यदि वा न वा॥१॥ तथा॥ सर्वत्रैका
दशी प्राप्त्या द्वादशीमिश्रिता नरैः॥ प्रातर्भवतु वा मा वा यतो नित्यमुपोषणमिति॥ त्रयोदश्यां द्वादशी सत्त्वे सत्त्वे चै
कादशी द्वादशी मिश्रितैव कार्या॥ व्रतस्य मुख्यत्वेन त्रयोदश्यां सत्त्वस्य व्रतप्रयोजकत्वादिति समुदायार्थः॥ नारदः
द्वादश्यैकादशी यत्र संगता त्रिदशाधिप॥ तामुपोष्य ततः कार्यं त्रयोदश्यां तु पारणं॥२॥ परतः एकादशीकलाया ऊ ४१
र्ध्वं॥ इमानि द्वादश्याः॥ सूर्योदयपर्यंतत्वे तदुपास्तो मानानि॥ ततोऽन्यूनत्वेपि सैवोपोष्या॥ तथा च कूर्मपुराणे॥ ॥

| | | | |
|---|---|---|---|
| शु | १० | २ | १५५ |
| मं | ११ | २ | |
| बु | १२ | ३ | |
| बृ | १३ | ४ | |

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ॥ तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणं ॥ १ ॥ स्कांदः ॥ एकादशी द्वाद
शी च रात्रिशेषे त्रयोदशी ॥ सोपोष्या च प्रयत्नेन महापुण्यविवर्द्धनी ॥ १ ॥ इति ॥ अत्रैके केचिद्विधेपि सूये पुत्रव
द्गृहिणां नक्तं ॥ न तूपवासः ॥ तथा च कौर्मे ॥ एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ॥ उपवासं न कुर्वीत पुत्र
पौत्रसमन्वितः ॥ वृद्धशातातपः ॥ एकादशी यदा विद्धा द्वादशी च क्षयं गता ॥ क्षीणा सा द्वादशी ज्ञेया नक्तं तत्र वि
धीयते ॥ २ ॥ पुत्रिणां इति शेषः ॥ उक्तवाक्यानुरोधात् ॥ अत एव ॥ एकादशी कलायत्र द्वादशी च क्षयं गता ॥ तत्र
नक्तं च कुर्वीत नोपवासं गृहाश्रमी ॥ इत्यपि पुत्रिविषयमेवेत्याहुः ॥ कौर्मेस्य पुत्रपौत्रसमन्वित इति पदं योग्य
तापरत्वेन गृहिबोधकं ॥ एतदनुरोधादिति तु युक्तम् ॥ दयश्चात्राविशेषात् ॥ सूर्योदयात्प्राक् निवृत्तिरूपस्त
स्यैतत्स्वरूपस्त्वग्राह्यः ॥ एवं च पारणाहे न लभेत इत्यादि वक्ष्यमाणवाक्यानुभयानाधिक्यविषयाण्येव ॥ ॥

| | | | |
|---|---|---|---|
| बु | २० | १ | |
| मं | घ | ६० | |
| बु | घ | १ | |
| हृ | १३ | | |

विद्धानधिकद्वादशीका यथा ॥ ॥ सर्वेषां सोमे उपवासः ॥ एकादशी यदेति वक्ष्यमाणपाद्मात् ॥
बृहन्नारदीये ॥ एकादशी यदा विद्धा द्वादश्यां न वतीयते ॥ द्वादशी च त्रयोदश्यां नास्ति तत्र कथं भवे
त् ॥ १ ॥ उपोष्या द्वादशी तत्र सर्वैरेव न संशयः ॥ एतदनुसारेणैव ॥ एकादशी यदा नु त्वापरतो द्वा

नि॰सु॰ दशी नवेत्॥ उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिमिति व्यासवाक्ये चतुर्थपादार्थवादः॥ सर्वेषां परत्रोपवासस्यै
वेष्टत्वात्॥ एकादशीनिमित्तोप्युपवासो वचनबलादेव द्वादश्यां यतो नास्ति वचनस्यातिभारः॥ इत्याहुरत्रेदं बोध्य
१२ मिदं वचनद्वयं वैष्णवविषयं॥ सर्वैरित्यस्य सकामैर्निष्कामैश्चेत्यर्थः॥ एकादशी यदा विद्धा परतोपि न वर्द्धते॥ य
तिभिर्गृहिभिश्चैव सैवोपोष्यान्वये तिथिरिति पाद्ये॥ अन्ये सामान्यतो दशमीविद्धायामुपवासस्य विधानात्॥ न चोदा
हृतवाक्यद्वयानुसारेणेदमुभयानाधिक्यपरमेवास्त्विति वाच्यं॥ एतदनुसारेणैतयोर्वैष्णवविषयताया एव वक्तु
मुचितत्वात्॥ न चात्र विनिगमकाभावः॥ विनिगमकान्तराभावेपि शिष्टसंप्रदायस्य विनिगमकत्वात्॥ न च दिनत्र
यमृते देवि नोपोष्या दशमीयुता॥ सैवोपोष्या सदा पुण्या परतश्चेत्त्रयोदशीति स्कांदवचने कार्ष्ण्यादिवास्योभयानाधि
क्यपरत्वं॥ इति वाच्यम्॥ द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः॥ तामेवोपवसेत्काममकामो विष्णुतत्परः॥ इति
कूर्मपुराणवचने कार्ष्ण्यनास्य वैष्णवविषयत्वात्॥ ईदृशविषये वैष्णवानामपि वचनादेव दशमीविद्धोपवास ४२
स्य वक्तुमुचितत्वात्॥ इति॥ एवं च यदि दैवात्तु संमिश्रा द्वादशीति वक्ष्यमाणनारदवचनं स्कांदादिवाक्यानि च तद्विष
याणि॥ अत एव॥ एकादशी न लभ्येत स्याद्युदाहरिष्यमाणकृष्णशृंगादिवाक्ये पुनः संकोचः॥ उत्सवस्तु वैष्ण

वविषयकाण्यपिवाक्यानितत्रातिविरोधाभावादुदाहरिष्यंते॥ ॥विद्धानधिकानधिकद्वादशीयथा॥ ॥

| | | | |
|---|---|---|---|
| बु | १० | १ | ८।५८ |
| मं | १२ | ५५ | व ५८ |
| बु | १३ | ५१ | |

सर्वेषांसोमउपवासः॥स्कांदे॥विद्धाप्यविद्धाविज्ञेयापरतोद्वादशीनचेत्॥इति॥पारणांद
नलभ्येतद्वादशीकलयाऽपिचेत्॥तदानींदशमीविद्धाप्युपोष्यैकादशीतिथिरितिवाक्यांतरं
पद्मपुराणे॥एकादशीदशाविद्धापरतोपिनवर्द्धते॥यातामिनर्गेहिनिष्ठैवसेवोपोष्यातदेति
थिरिति॥नवर्द्धतइतिसाम्यानिप्रायेण॥वेयइतिस्पृनतानिप्रायेण॥यद्यपिचात्रएकादश्याएवअनाधिक्य
मुक्तं॥तथापिद्वादश्याअपितद्बोध्यं॥दिनत्रयमृतंदेविनोपोष्यादशमीयुता॥सेवोपोष्यासदापुण्यापरतश्चे
त्रयोदशीतिस्कांदात्॥अतएव॥यदितुदैवात्संसिद्धेदेकादश्यांदिनत्रयं॥तत्रक्रतुशतंपुण्यंद्वादशीपारणेभ
वेत्॥इतिनारदवचनं॥द्विस्टगेकादशीयत्रतत्रसंनिहितोहरिः॥तामेवोपवसेत्कामनकामोविष्णुतत्परः॥१॥
इतिकूर्मपुराणवचनंचानयानाधिक्यपरं॥एकादशीयदाविद्धेतिद्वादश्याधिक्येपरोपवासविधानेनतयोर्बा
धाच्च॥एवमस्मिनवाक्यद्वयेपिबोध्यं॥दशमीद्वादशीयोस्पृशातीतिद्विस्पृक्॥दिनत्रयमृतेइतिस्कांदानुसारा
त॥दिनत्रयमृतइत्यादिवचनत्रयंविद्धस्पृनायामुपवासेमानं॥साम्येपिसेवोपोष्या॥एकादशीनलभ्येतसक।

नाद्वादशीं नवेत॥ नपोष्या दशमीविद्धा ऋषिसद्दालकोब्रवीत॥२॥ इत्यादिऋष्यश्रृंगादिवचनेभ्यः॥ अविद्धानि
निविद्धेषु तन्नक्षत्राणि दिनानि तु॥ मुहूर्तैः॥ पंचभिर्विद्धा॥ ग्राह्यैवैकादशीतिथिरिति ऋष्यश्रृंगवचनात॥ अत्र

मुहूर्तपंचकमरुणोदयमारभ्य बोध्यं॥ अन्यथापरत्रैकादश्या अवश्यंभावेनाऽविद्धाऽलाभाभावात॥ इमानि वा
क्यानि॥ पुत्रवद्गृहस्थातिरिक्तविषयाणि॥ सपुत्रगृहिणां तु उत्तरत्रोपवासः॥ एकादशीदिनक्षये उपवासं करोति यः॥
तस्य पुत्रा विनश्यंति मघायां पिंडदो यथा॥ एतदेकवाक्यतयैव॥ एकादश्यां यदा वत्स दिनक्षयतिथिर्भवेत॥ अत्रो
पोष्या द्वादशी स्यात्त्रयोदश्यां तु पारणमित्यादिवाक्यान्यपि सपुत्रगृहिविषयाणि॥ सपुत्रगृहिकृतदशमीवेधनि
षेधसहचरितद्वादशीव्रतबोधकानि॥ दिनक्षये तु संप्राप्ते उपोष्या द्वादशी भवेत॥ दशमीशेषसंयुक्तां न कुर्वी
त कदाचनेत्यादिकूर्मपुराणादिवाक्यानि चैतादृशविषयाणि॥ पुत्रवद्गृहिणां न पुनरत्रोपवासो न्यूनत्वरूप
क्षये एव बोध्यः॥ न तु साम्यरूपे॥ तथा हेमाद्रौ भविष्ये॥ एकादशी कलाप्येका परतो न च वर्द्धते॥ गृहिभिः पुत्र
वद्भिश्च सैवोपोष्या न दा तिथिरिति पूर्वत्रोपवासविधिः संगच्छते॥ परतो वृद्ध्यभावोक्तेः साम्येनान्वयात॥ अत ए
ववाक्यांतरेण न विरोधः॥ मुमुक्षूणां तु साम्ये परैव॥ दशमीमिश्रिता पूर्वा पूर्णा तु द्वादशी परा॥ एकादश्यां महा

प्रकृत उपवासः कथं भवेत्॥ इत्युपक्रम्य॥ शुद्धेवद्वादशी राजन्॥ उपोष्या मोक्षकांक्षिभिरिति शिवरहस्ये
॥ तथाभिधानात्॥ पराह्नस्यस्य पूर्वाह्णे रात्राववि्रुद्धत्वमर्थः॥ सामर्थ्यात्॥ पारणदिने देवमभ्यर्च्य तमिवे
दनेमंत्रः पठितव्यः॥ अज्ञानतिमिरांधस्य व्रतेनानेन केशव॥ प्रसीद संमुखो नाथ ज्ञानदृष्टिप्रदो भवेति॥ एत
च्च व्यासवचनं॥ शैवैस्तु ग्राहकरैर्नूह्नः कार्यः॥ तच्च पारणं॥ यदा पारणदिने द्वादश्यां भोजनमापद्येत तदा प्रा
क्कालीनं सकलं कृत्स्नमरुणोदये कृत्वा द्वादशीमध्य एव कर्तव्यं॥ तथा च स्कंदपुराणे॥ कलाद्वयं त्रयं वापि द्वा
दशी यत्र दृश्यते स्नानार्चनादिकं कर्म तदा रात्रौ विधीयते वृतिरात्रौ विस्मृते प्यरुणोदये एव कार्य्यं॥ तथा च ना
रदीये॥ अल्पायामथ विप्रेंद्र द्वादश्यामरुणोदये॥ स्नानार्चनक्रियाः कार्या जपहोमादिसंयुताः इति पद्मपुरा
णेपि॥ यदा भवति साल्पा तु द्वादशी पारणादिने॥ उषःकाले द्वयं कुर्यात्॥ प्रातर्माध्याह्निकं तदेति॥ यस्य वा व
तोपक्रमस्त्वरुणोदयाधिककालसाध्यं तेन तद्दिनसंख्यादिसंकोचेनाप्यावश्यकं कृत्वा द्वादशीमध्ये पारणं कर्तव्यं
॥ महाहानिकरी ह्येषा द्वादशी लंघिता नरैः॥ करोति धर्महरणमस्नातेव सरस्वतीति पद्मपुराणे॥ द्वादशीलंघने
दोषश्रवणात्॥ अस्नाते स्वधिकरणेक्त प्रत्ययः॥ तेन तस्यां स्नानमकृत्वा लंघिता सरस्वती यथा धर्मं हरति त

शै.सु. था। भोजनेन लंघिता द्वादशी पवीत्रार्थः॥ तेन नक्तंतरे उत्तीर्य स्नानं॥ सरस्वत्यां तु स्नात्वा चरणमिति सूचितं॥ यदा तु मृत
तिथिनिमित्तकं॥ गजच्छायाथवा सूर्यग्रहणपाद्यं वा ग्रहणयोगनिमित्तकं वा श्राद्धस्नानादिकं त्रयोदश्यां कर्तव्यं भवति॥
संक्रांतरे वा शास्त्रीयं॥ तदा प्रत्यक्षद्वादशीमध्ये द्भिः पारणं कृत्वा पश्चात् श्राद्धादि विधाय भोक्तव्यं॥ यदाह देवलः॥
४४ संकटे विषमे प्राप्ते द्वादश्यां पारयेत्कथं॥ अद्भिस्तु पारणं कुर्यात् पुनर्भुक्ते न दोषकृदिति॥ अत्र चाद्भिः॥ पारणमा
त्रं विधीयते॥ श्राद्धाद्यनपकर्षस्तु वचनाभावादेव सिद्धः॥ माध्यान्हिकापकर्षस्तु नृपस्यापि द्वादश्यां भवितव्यं।
व॥ सर्वदैवानुपवासानां प्रातरेव हि पारणेति माधवाचार्योदाहृतवचनात्॥ भोजनमाध्यान्हिकयोश्च वाचनिकयोर्वा
पर्यसद्भावात्॥ यदा तु प्रातःकाले द्वादशी प्रथमपादव्याप्ता भवति॥ तदा तमतिलंघ्यैव पारणं कर्तव्यं॥ द्वादश्याः
प्रथमः पादो हरिवासरसंज्ञितः॥ तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः इति विष्णुधर्मोत्तरात्॥ एतेषां चद।
शाम्यादिनियमानामंगभूतानां लोपे प्रायश्चित्तं ग्रंथांतराद्द्रष्टव्यं॥ विस्तरभयादिहास्माभिर्न लिख्यते॥ ॥
इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे एकादशीव्रतनिरूपणं नाम द्वाविंशः किरणः॥ २२॥ अथ प्र ४
दोषव्रतं॥ ब्रह्मोत्तरखंडे॥ पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा॥ इत्युपक्रम्य धर्मगुप्तेतीहासरूपवर्णं॥

एवमन्येसमाराध्यप्रदोषेगिरिजापतिं॥ त्रमंतेभीप्सितान्कामान्देहांतेतुपरांगतिं॥ तथा॥ एतन्महाव्रतंपुण्यंप्रदोषे
गिरिशार्चनं॥ धर्मार्थकाममोक्षाणांयदेतत्साधनंपरं॥ अत्रत्रयोदशीप्रदोषव्यापिनीग्राह्या॥ ततस्तुलोहितेभा
नौस्नात्वासनियमोव्रती॥ पूजास्थानंततोगत्वाप्रदोषेशिवमर्चयेत्॥ इतिस्कंदपुराणोक्तव्रतविधौ॥ प्रदोषस्य
शिवपूजनकालत्वोक्तेः॥ पूजाव्रतेषुसर्वत्रतत्कालव्यापिनीतिथिरितिनियमात्॥ तत्रपूर्वोत्तरान्यतरदिनेप्र
दोषव्याप्तौतस्यामेवासैवग्राह्या॥ दिनद्वयेप्रदोषव्याप्तौ॥ साम्येनतदेकदेशस्पर्शेवाउत्तरा॥ व्रातः॥ संकल्पये
द्दिवानुपवासव्रतादिकमित्युक्तसंकल्पकालमारभ्यसत्वात्॥ वैषम्येणतदेकदेशस्पर्शेतदाधिक्यवतीपूर्वा
पिग्राह्या॥ यदिदेवपूजाभोजनपर्याप्तंतदाधिक्यंस्यात्॥ नोचेत्साम्यपक्षवदुत्तरैव॥ सायान्हरूपगौणकालव्या
प्तेरपितत्रलाभात्॥ सायान्हस्यगौणत्वंतत्कालत्वंप्रदोषस्यत्र्यंभावेतत्रनक्तविधानादवगम्यते॥ तथाचस्कंदपु
राणे॥ प्रदोषव्यापिनीतस्यांदिवानक्तंविधीयते॥ आत्मनोद्विगुणाछायामंदीभवतिभास्करे॥ तन्नक्तंनक्तमि
त्याहुर्ननक्तंनिशिभोजनं॥ एवंज्ञात्वाततोविद्वान्सायान्हेतुभुजिक्रियां॥ कुर्यान्नक्तव्रतीनक्तफलंभवतिनिश्चितं तथा मु
हूर्तोनंदिनंनक्तंप्रवदंतिमनीषिणः॥ नक्षत्रदर्शनान्नक्तमहंमन्येगणाधिप॥ इति॥ भविष्यपुराणेपि॥ मद्व

शा.सु. त्रयदर्शीनोर्द्ध्वकालस्य अहं मन्ये इत्युक्त्या मुख्यत्वं ॥ पूर्वाह्णोक्तस्य च गौणत्वमवगम्यते ॥ दिनं नक्तं नक्तव्रतस्योप
मित्यर्थः ॥ नक्तव्रतदर्शीमादित्यत्र ऊर्ध्वमित्यध्याहारः ॥ प्राप्येति ल्यब्लोपनिमित्ता वा पंचमी ॥ अत एव दिनद्वये
पि प्रदोषस्य शोभावे परतरैव ॥ संकल्पकालव्याप्तेश्च ॥ न चात्रैकभक्तादिवन्मुख्यकालेऽनुष्ठानं ॥ किंतु गौणका
४५ ल एव ॥ सायाह्ने तु भुंजि क्रियामिति वचनात् ॥ तत्पूर्वस्य च पूजादेरप्यपकर्षेण तत्रैव कर्तव्यत्वात् ॥ प्रदोषका
लश्च ॥ त्रिमुहूर्तं प्रदोषः स्याद्रवावस्तं गते सतीत्युक्तो बोध्यः ॥ अत्रत्यपूजादिप्रकारः ब्रह्मोत्तरखंडे सप्तमाध्याये द्र
ष्टव्यः ॥ ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैववसुधाकरे प्रदोषव्रतनिरूपणं नाम त्रयोविंशः किरणः ॥ २३
॥ ॥ अथ शनिप्रदोषसोमप्रदोषसोमवारव्रतानि ॥ तत्र तावत्स्कांदे ॥ वृत्रादिंद्रस्येतरेषां देवानां च भयोत्पत्तौ बृ
हस्पतिः श्रीशिवाराधनस्यैव तन्निवारकत्वे उपदिष्टे ॥ गुरोक्तेन विधानेन कीदृशेन व्रतेन च ॥ आराधनीयो गौरी
शो अस्माभिर्जयकांक्षुकैः ॥ तद्वदस्व सुराचार्य त्वं हि नः परमा गतिरिति देवानां प्रश्ने कृते बृहस्पतिर्वाक्यं
॥ कार्त्तिकादिषु मासेषु मंदवारे त्रयोदशी ॥ विशेषात्कृष्णपक्षे तु सर्वकामकरी शुभा ॥ तस्यां प्रदोषसमये लिंगरूपी ४५
सदाशिवः ॥ पूजनीयो हि देवेंद्र सर्वकामसमृद्धये इत्युक्त्वा मध्याह्ने स्नानादिकमुक्त्वा ग्रामाद्बहिः स्थितं लिंगं ग्रा

मात्वच्छतगुणं स्मृतं॥ वाप्याच्छतगुणं पुण्यमरण्यस्य च पूजने॥ वन्याच्छतगुणं प्रोक्तं लिंगे वै पर्वतस्थिते॥ पार्वताच्छतगु
तगुणं तपोवनसमाश्रिते॥ काश्यादिसंस्थिते लिंगे पूजितं स्यादनंतकं॥ इति लिंगविशेषेण फलविशेषमुक्त्वा शिव
पूजनादिप्रकारं चोक्त्वा॥ एवं यः कुरुते मर्त्याऽब्दं पद्धतमुत्तमं॥ शनिवारेण सप्तर्क्षं साद्यापनविधिं नरः॥ आयुरा
रोग्यमैश्वर्यं पुत्रपौत्रमनंतकं॥ शंभुं पूजयते नित्यं प्रसादात् शंकरस्य च॥ तस्मात्त्वमपि देवेश पूजयस्व सदाशिवं॥
शनिप्रदोषविधिना कृष्णवं व्रतं विजेष्यसि॥ एवं निशम्य गुरुणा कथितं तदानीं॥ सिंद्धोपि तेन विधिना गिरिशं प्रपूज्य
॥ लोकं प्रसन्नपितृदैत्यपतिं प्रवृद्धं तं तत्क्षणादगमयत्॥ तत्सुक्तं॥ ब्रह्मोत्तरखंडे॥ शिवपूजा सदा लोके हेतुः॥
स्वर्गापवर्गयोः॥ सोमवारे विशेषेण प्रदोषादिगुणान्विते॥ १॥ प्रदोषः त्रयोदश्याः संबंधरूपः॥ इदं सोमप्रदोषमा
हात्म्य॥ परं॥ केवलेनापि ये कुर्युः॥ सोमवारे शिवार्चनं॥ न तेषां विद्यते किंचिदिहामुत्र च दुर्लभं॥ २॥ केवल्य
मुक्तप्रदोषराहित्यं॥ उपोष्यतः शुचिर्भूत्वा सोमवारे जितेंद्रियः॥ वैदिकैर्लौकिकैर्वापि विधिवत्पूजयेच्छि
वं॥ ३॥ ब्रह्मचारी गृहस्थो वा कन्या वापि सभर्तृका॥ विभर्तृका वा संपूज्य लभते वरमीप्सितं॥ इति तत्रैव॥ सो
मवारे शिवं गौरीं पूजयस्व समाहिता॥ उपोषिता वा सुस्नाता विरजांबरधारिणी॥ १॥ यतवाक्निश्चलमतिः

शि॰सु॰ पूजां कृत्वा यथोचितां॥ ब्राह्मणान् भोजयित्वाथ शिवं सम्यक् प्रसादयेदित्युक्त्वा॥ अभिषेकपीठंपूजादीनां पा

पुत्रैश्वर्यसाम्राज्यादिफलकत्वमुक्त्वा॥ होमेन सर्वकोशानां समृद्धिरुपजायते॥ सर्वेषामेव देवानां तुष्टिः संयमभो

४६ जनात्॥ १॥ इत्यभिधाय॥ शिवं सोमवारे शिवामपि॥ संयमभोजनं दिवा अभुक्त्वा प्रदोषे शिवं संपूज्य भोजन

मिति॥ ये सोमवारे स्वेच्छं हि दिवा कुर्वंति भोजनं॥ तान्पातयंतु नरकेषति घोरेषुयलतः॥ इति शिवरहस्ये: करणे

दोषश्रवणात्तथा॥ निशिथत्वेन कर्तव्यं॥ भोजनं सोमवारे॥ उपोषणादिनान्यस्मिन् दिवसे नियमोत्ययं॥ इ

त्यादिषु तत्रैव यत्नादिपदश्रवणाच्च नित्यमिदं॥ ॥ इति श्रीमत्स्वामिसदानंदविरचिते शैवसुधाकरे सो

मवारव्रतनिरूपणं नाम चतुर्विंशः॥ २४॥ ॥ अथ श्रीशिवरात्रिः॥ सा च कृष्णादिमासरीत्या फा

ल्गुनकृष्णचतुर्दशी॥ शुक्लादिरीत्या तु माघकृष्णचतुर्दशी॥ अत्र चंद्रो भोलिंगमाविर्भूतमिति ईशानसंहि

तायामुक्तं॥ तथाहि॥ माघकृष्णचतुर्दश्यामादिदेवो महानिशि॥ शिवलिंगतयोद्भूतः कोटिसूर्यसमप्रभः॥ इ

ति पुराणांतरे तु॥ तस्मिन्दिने समुद्भान्तिः स तं विषं पीत्वा जीवोद्धारप्रयोजकत्वतमा विश्चिकीर्षुः॥ श्रीशिवो ४९

विषपानजातसंतापजीवानुकारी संविवेश मदोपोषिते देवैर्निशि जागद्भिश्च तु यामं जलप्रसेकादिना परा

मितः॥ ततस्तेभ्यो जगाद त्वस्यां निरूपेवं सदोपोष्य जागृद्भिः सर्वैरहमर्च्योऽस्ते नरः सर्वार्थसिद्धिं नेविष्यति नो
चेन्महाहानिः स्यादिति स्थितं॥ स्कांदे तु॥ मार्गशीर्षे समुद्भूतं लिंगं देवैरस्यां रात्राववर्चितमिति स्थितम्॥ अ
त्र कल्पभेदेन व्यवस्था बोध्या॥ शिवरहस्ये॥ तस्मात्सर्वेषु देवर्षे माघकृष्णचतुर्दशी॥ शिवरात्रिः समा
ख्याता विशेषं त्रिपुरद्विषः इति॥ माघग्रहणममांतमासेन॥ स्कांदेपि॥ माघफाल्गुनयोर्मध्ये असिताया
चतुर्दशी॥ शिवरात्रिस्तु सा ख्याता सर्वयज्ञोत्तमोत्तमेति॥ शिवरात्रिव्रतं चोपवासपूजाजागरणरूपत्रयप्रधा
नत्रयसमुदायरूपं॥ उपवासप्रभावेन बलादपि च जागरात्॥ शिवरात्रेस्तथा तस्यां लिंगस्यापि च पूजया॥
अक्षयाँल्लभते भोगान् शिवसायुज्यमाप्नुयादिति॥ नागरखंडे॥ त्रयाणामविफलसंबंधात्॥ क्वचिदुप
वासमात्रश्रवणं त्वितरयोरुपलक्षणं॥ क्वचित्तु अशक्तं प्रत्यनुकल्पत्वेनैकस्य द्वयोर्वा श्रवणं॥ अथवा
शिवरात्रिं च पूजाजागरणैर्नयेत्॥ कश्चित्पुण्यविशेषेण व्रतहीनोपि यः पुमान्॥ जागरं कुरुते तत्र स रुद्रसम
तां व्रजेदित्यादिषु॥ अथवाऽऽद्यादिशब्दश्रवणात्॥ अत्र चतुर्दशी॥ अर्धरात्रव्यापिनी ग्राह्या॥ तथा च नारदीये॥
॥ माघमासस्य चतुर्दश्यामादिदेवो महानिशि॥ शिवलिंगात्समुद्भूतः कोटिसूर्यसमप्रभः॥ तत्कालव्यापिनी ग्राह्या

त्रो·सु·
४७

शिवरात्रिव्रते तिथिरिति॥ तत्र परेद्युरेव निशीथव्याप्तौ दिनद्वये वा निशीथाव्याप्तौ परैव॥ पूर्वेद्युरपरेद्युर्वा महा
निशि चतुर्दशी॥ व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नर इति कृत्यरत्नोदाहृतवचनात्॥ माघासिते भूतदिनं हि
राजन्नुपैति योगं यदि पंचदश्या॥ जयाप्रयुक्तां न तु जातु कुर्याच्छिवस्य रात्रिं प्रियकृच्छिवस्येति हेमाद्र्युदाहृतव
चनात्॥ जयया त्रयोदश्या प्रकर्षेण युक्ता अभिसंयुक्तत्वात्॥ पूर्वेद्युस्त्रयोदश्या बहुरात्री॥ व्याप्तिप्रतीतिः॥ या तु पूर्वे
द्युरेव निशीथयोगिनी दिनद्वये वा निशीथयोगिनी सा पूर्वैव॥ तदुक्तं॥ स्कांदे॥ कृष्णाष्टमी स्कंदषष्ठी शिवरात्रि
चतुर्दशी॥ एताः पूर्वयुताः कार्यास्तिथ्यंते पारणं भवेत्॥ तथा॥ जयंती शिवरात्रिश्च कार्ये भद्राजयान्विते॥ तथा
॥ माघफाल्गुनयोर्मध्ये या स्याच्छिवचतुर्दशी॥ अनंगेन समायुक्ता कर्तव्या सा सदा तिथिरिति॥ ननु पूर्वेद्युरेव नि
शीथयोगिनी तत्कालयोगात्पूर्वेति लिखितवचने स्पष्टं पूर्वैवेत्युक्तं॥ दिनद्वये तद्योगिनी तु परेद्युर्गिनी तु परेद्युः॥
प्रदोषनिशीथोभयव्याप्तिलाभात् संकल्पकालमारभ्य सत्वादहोरात्रोभययोगात् परैव युक्ता॥ न तु पूर्वा॥ अत एव॥
माधवेनापि निशीथव्यापिनी पूर्वैव ग्राह्येत्युक्तं॥ तिथितत्वेप्येवमेव॥ तत्कथं पूर्वेद्युरेवेत्युच्यत इति चेत्॥ उच्यते॥
अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत्॥ पूर्वविद्धैव कर्तव्या शिवरात्रिः शिवप्रियैरिति पद्मपुराणवचनमीदृशा ४७

एवंविषये पूर्वविद्धाविधानार्थं॥ अंततः सर्वा एव पि पूर्वविद्धाविधायकानि प्रागुक्तानि वाक्यानि॥ महतामपि
पापानां दृष्टा वै निष्कृतिः पुरा॥ न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं शिवामिति स्कंदपुराणीयेमावास्यायुतानिषेधश्चैतादृशा
विषय एव सार्थकः॥ प्रदोषव्याप्त्येकदेशे निशीथयोगे॥ पूर्वा ग्राह्या एव माघकृष्णस्य चतुर्दश्यामिति॥ पूर्वोदाहृतनारदी
यवचनेन पूर्वेद्युरपरेद्युश्चैति प्रागुक्तपरत्वात् पुराणवचनेन च सिद्धत्वात्॥ एवं सति तत्र पूर्वोक्तवचनाना
मानर्थक्यात् तानि दिनद्वये निशीथव्याप्तिपराः॥ पूर्वेद्युः प्राह्यत्वं प्रतिपादयंति॥ किंच॥ अर्धरात्रात्परस्तात् चेदिति
वचने पूर्वविद्धे चत्वेवकारादुत्तरविद्धानिवर्तकादुत्तरविधायाः प्रसक्तिर्गम्यते॥ सा चोभयत्र निशीथयोगे एव सं
भवति॥ न तु पूर्वेद्युरेव निशीथयोगे॥ तस्मादुभयत्र निशीथयोगेऽपि पूर्वैवेति॥ स्कंदपुराणे॥ आदौ मार्गशिरे मा
सि पौषे वा द्विभेऽपि वा॥ प्रारंभयेन्माघमासे वा द्वादशो वमुपोष्ययेद्विष्णादिवचनैः प्रतिमासकृष्णचतुर्दशीषु॥ व्र
तोपवासजागरणात्मकं काम्यं शिवरात्रिव्रतं विहितं॥ तस्यापि रात्रौ प्रतियामं पूजाजागरणस्य च विधानात्सक
लरात्रिसाध्यत्वात् बहुरात्रिव्यापिनी तत्र ग्राह्या॥ दिनद्वये रात्रिसाम्ये॥ पूर्वा॥ रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी ति
थिरिति ब्रह्मवैवर्तात्॥ येषां प्रदोषव्याप्तिरपि निर्णायिका॥ तेषां मते अपरेति स्कंदपुराणे॥ माघकृष्णचतुर्दश्यां

शे॰सु॰ रविवारोयदा भवेत॥ भौमोवाथ भवेद्देवि कर्तव्यं व्रतमुत्तमं॥ शिवयोगस्य योगेतु तद्भवेदुत्तमोत्तममिति॥ तथाच
॥ त्रयोदशी कलाप्येका मध्ये चैव चतुर्दशी॥ अंते चैव सिनीवाली त्रिस्पृशां शिवमर्चयेदिति॥ पारणं च॥ स्कंद
४८ पुराणे एवं तिथ्यंते तिथिमध्ये च विहितं॥ कृष्णाष्टमी स्कंदषष्ठी शिवरात्रि चतुर्दशी एताः पूर्वयुताः कार्यास्तिथ्यं
ते पारणं भवेदिति॥ उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणं॥ कृतैः॥ सुकृतं जन्मलक्षैर्लभ्यते वाथवा न वेति॥ त
त्र॥ सा त्वस्तमयपर्यंतव्यापिनी चेत्परेहनि॥ दिवैव पारणं कुर्यात्पारणान्नास्ति दोषभागिति शिवरात्रिव्रतकर
णपद्धतिकारादर्शादिलिखितवचनात्तिथ्यंते उतीस्य दिवा पारणस्य कर्तुंशक्यत्वे तिथ्यंते॥ नोचेत्तिथि
मध्ये एवेति व्यवस्था॥ इदं व्रतं संयोगपृथक्त्वन्यायेन नित्यं काम्यं च॥ तथाच॥ माधवीये॥ स्कांदे॥ परात्प
रतरं नास्ति शिवरात्रिं परात्परं॥ न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरं॥ जंतुर्जन्मसहस्रेषु भ्रमते नात्र संशय
इति॥ अकरणे प्रत्यवाय उक्तेः॥ वर्षे वर्षे महादेवि नरो नारी पतिव्रता॥ शिवरात्रौ महादेवं नित्यं भक्त्या प्रपूज
येदिति वीप्सोक्तेः॥ अर्णवो यदि वा शुष्येत् क्षीयते॥ हिमवानपि॥ चलंत्येते कदाचिद्वै निश्चलं हि शिवव्रतमि ४८
ति वचनाच्च नित्यता॥ मम भक्त्या तु यो देवि शिवरात्रिमुपोषकः॥ गणत्वमक्षयं दिव्यमक्षयं शिवशासनं॥ सर्वा

न्भुक्त्वा महाभोगानंततो मोक्षमवाप्नुयादिति स्कांदात्॥ प्रात्स्नाह्निकमेतस्याश्चतुर्विंशाह्निकं तु वै॥ तत्रैव शाम्भसंहि-
तावचनात्॥ काम्यता॥ तत्रैव॥ शिवरात्रिव्रतनाम सर्वपापविनाशनं॥ आचंडालमनुष्याणां भुक्तिमुक्तिप्रदायकं॥ अथ
मत्रसंक्षेपतः शिवरात्रिव्रतानुष्ठानप्रकारः॥ धृतत्रिपुंड्रुद्राक्षस्तिथ्याद्युल्लिख्य शिवप्रीतिकामः॥ शिवरात्रिव्रतं
ह्येतत्करिष्येहं महाफलं॥ निर्विघ्नमस्तु मे चात्र त्वत्प्रसादाज्जगत्पते॥ चतुर्दश्यां निराहारो भूत्वा शंभो परेहनि॥ मोक्ष्ये
हं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वरेति पठित्वा जलमुत्सृजेत्॥ ततो नित्यकृत्यं विधाय रात्रौ प्रथमप्रहरे शिवपू-
जां करिष्य इति संकल्प्य॥ पूर्वप्रतिष्ठिते लिंगे प्रतिष्ठिते वा तदैव प्राणप्रतिष्ठां कृत्वा वक्ष्यमाणपार्थिवलिंगपूजा-
प्रकारेण पंचाक्षरेण वैदिकेन वा पौराणमंत्रैर्वा प्रणवादिचतुर्थ्यंतनमोंत शिवनाम्ना वा वाहनाद्य१चारैः पूजयेत्
॥तत्र विशेषः॥ ॐ ह्रौं ईशानाय नमः॥ इति प्रथमप्रहरे दुग्धेन स्नपनं॥ शिवरात्रिव्रतं देवपूजाजपपरायणः॥ करो-
मि विधिवद्दत्तं गृहाणार्घ्यं महेश्वरेत्यर्घ्यदानं॥ ततस्तन्मंत्रजपेन तत्कथाश्रवणादिभिर्वा जागरणं॥ तद्ध्यानं तज्जपः
स्तोत्रं तत्कथाश्रवणादिकं॥ उपवासकृतां ह्येते गुणाः प्रोक्ता मनीषिभिरिति वचनात्॥ द्वितीयप्रहरे॥ ॐ ह्रौं अघोरा-
य नम इति दध्ना स्नपनं॥ नमः शिवाय शांताय सर्वपापहराय च॥ शिवरात्रौ ददाम्यर्घ्यं प्रसीद उमया सहेत्यर्घ्यदा-

नं॥ तृतीयप्रहरे॥ ॐ ह्रौं वामदेवाय नम इति घृतेन स्नपनं॥ दुःखदारिद्र्यशोकेन दग्धोहं पार्वतीपते॥ शिवरात्रौ ददाम्यर्घमु
माकांत गृहाण मे इत्यर्घदानं॥ चतुर्थे॥ ॐ ह्रौं सद्योजाताय नम इति मधुना स्नपनं॥ एवं मूलमंत्रजपादिना रात्रिमतिवा
ह्य॥ प्रभाते॥ अविघ्नेन व्रतं देव त्वत्प्रसादात्समापितं॥ क्षमस्व जगतां नाथ त्रैलोक्याधिपते हर॥ यन्मयाद्यकृतं पु
ण्यं तद्रुद्रस्य निवेदितं॥ त्वत्प्रसादान्महादेव व्रतमद्य समर्पितं॥ प्रसीदो भव मे श्रीमन्सद्गतिः॥ प्रतिपाद्यतां॥ त्वदालो
कनमात्रेण पवित्रोस्मि न संशयः॥ इति व्रतं समर्पयेत्॥ परदिने यथाशक्ति ब्राह्मणान्भोजयित्वा॥ संसारक्लेशदग्ध
स्य व्रतेनानेन शंकर॥ प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भवेति संप्रार्थ्य॥ बंधुभिः॥ सह पारणं कुर्यादिति॥ सच्छा
स्त्राब्धिभवो भवं व्रजतां सौख्याबुधेर्वर्धकः॥ श्रीमच्छैवविरोधिदुर्जनमहाचिंताब्धिवृद्धिप्रदः॥ संसारोष्णता
पतप्तकृतिविदां विक्लिष्टसद्वीप्रियो॥ दीनानामतितापकृच्च सततं विद्वच्चकोरप्रियः॥ २॥ श्रोतस्तेन समीहितार्थह
ननासंक्षेपधीगोचरः सततत्कौमुदकुड्मलस्फुरणकृत् बुधीमनोज्ञापकृत्॥ दृतत्वे शैवसुधाकरोयमुदियादीत्
प्रियाणां सदा॥ तद्वाक्यैः परिनिःसृतैः स्वकीरणैर्हृत्त्वज्ञमोहं तमः॥ ३॥ अष्टपाष्टकणेन त्वष्टपक्षयोः कष्टमष्टकृति
रष्टकष्टयोः॥ कर्मदृष्टसुरश्मिदृष्टशिक्षयोर्बाल्यमाष्टजपरोष्टतेष्टयोः॥ ४॥ ज्ञाननामामतप्रूपवादयो॥ द्वैतवा

॥ श्रीगणेशाय नमः ॥ ॥ तपोयज्ञदानादिभिः शुद्धबुद्धिर्विरक्तो नृपादौ पदे तुच्छबुद्ध्या ॥ परित्यज्य सर्वं यदाप्नो-
ति तत्त्वं परं ब्रह्म नित्यं तदेवाहमस्मि ॥ १ ॥ दयालुं गुरुं ब्रह्मनिष्ठं प्रशान्तं समाराध्य भक्त्या विचार्य स्वरूपम् ॥ यदा-
प्नोति तत्त्वं निदिध्यास्य विद्वान् परं ॥ २ ॥ यदानन्दरूपं प्रकाशस्वरूपं निरस्तप्रपंचं परिच्छेदशून्यं ॥ अहंब्रह्मवृ-
त्त्येकगम्यं तुरीयं परं ॥ ३ ॥ यदाज्ञानतो भाति विश्वं समस्तं विनष्टं च ॥ सद्यो यदात्मप्रबोधे ॥ मनोवागतीतं विशु-
द्धं विमुक्तं परं ॥ ४ ॥ निषेधे कृते नेति नेतीति वाक्यैः समाधिस्थितानां यदाभाति पूर्णं ॥ अवस्थात्रयातीतम-
द्वैतमेकं परं ॥ ५ ॥ यदानन्दलेशैः समानन्दि विश्वं यदाभाति सत्त्वे तदाभाति सर्वं ॥ यदालोचने द्व्यमन्यत्समस्तं प-
रं ॥ ६ ॥ अनन्तं विभुं सर्वयोनिं निरीहं शिवं संगहीनं यदोंकारगम्यं ॥ निराकारमृत्युज्ज्वलं मृत्युहीनं परं ॥ ७
॥ यदानन्दसिंधौ निमग्नः पुमान्स्यादविद्याविलासः समस्तप्रपंचः ॥ तदा न स्फुरत्यद्भुतं यन्निमित्तं परं ॥ ८ ॥
स्वरूपानुसंधानरूपां स्तुतिं यः पठेदादराद्भक्तिभावो मनुष्यः ॥ शृणोतीह वा नित्यमुद्युक्तचित्तो भवेद्विष्णुरत्रैव वेदप्रमा-
णात् परं ॥ ९ ॥ न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः ॥ अनेकान्तिकत्वात्सुसेकसिद्धस्तदेकोवशि-
ष्टः शिवः केवलोहं ॥ न वर्णाश्रमाचारधर्मा न मे ज्ञान मे धारणाध्यानयोगादयोऽपि ॥ अनात्माश्रयोऽहंममाध्या

सद्वानात्तदेकोवशिष्टःशिवःकेवलोऽहं॥२॥ नमातापितावानदेवानलोकानवेदानयज्ञानतीर्थंब्रुवन्ति॥ सुषुप्तौनिरस्ता
तिशून्यात्मकत्वात्तदेकोवशिष्टः॥३॥ नसांख्यंनशैवंनतत्पांचरात्रंनजैनंनमीमांसकादेर्मतंवा॥ विशिष्टानुभूत्याविशुद्धा
त्मकत्वात्तदेकोवशिष्टः॥४॥ नशुक्लंनकृष्णंनरक्तंनपीतंनकुब्जंनपीनंनह्रस्वंनदीर्घं॥ अरूपंतथाज्योतिराकारक
त्वात्तदेकोवशिष्टः॥५॥ नचोर्ध्वंनचाधोनचांतर्नबाह्यंनमध्यंनतीर्यङ्नपूर्वापरादिक्॥ वियद्व्यापकत्वादखंडै
करूपस्तदेकोवशिष्टः॥६॥ नशास्तानशास्त्रंनशिष्योनशिक्षानचत्वंनचाहंनचायंप्रपंचः॥ स्वरूपावबोधोविकल्पासहिष्णुस्त
देकोवशिष्टः॥७॥ नजाग्रन्नमेस्वप्नकोवासुषुप्तिर्नविश्वोनवातैजसःप्राज्ञकोवा॥ अविद्यात्मकत्वात्त्रयाणांतुरीय
स्तदेकोवशिष्टः॥८॥ अपिव्यापकत्वाद्धितत्त्वप्रयोगात्स्वतःसिद्धभावादनन्याश्रयत्वात्॥ जगत्तुच्छमेतत्समस्तंतद
न्यस्तदेकोवशिष्टः॥९॥ नचैकंतदन्यद्द्वितीयंकुतःस्यान्नवाकेवलत्वंनचाकेवलत्वं॥ नशून्यंनचाशून्यमद्वै
तकत्वात्कथंसर्ववेदांतसिद्धंब्रवीमि॥ १० ॥ इतिश्रीमच्छंकराचार्यविरचितंसिद्धांतबिंदुस्तोत्रंसमाप्तम्॥
श्रवणासनचिंतायजितेन्द्रियाय श्रुतिःशिरःपद्मसमाश्रिताय॥ परात्मचेतोऽसिनिवेशिताय नमोऽस्तुतेज्ञानमुद्राय
नित्यं॥ ॥

दजिनदुष्प्रमादयोः॥ तच्छुकस्यकुमवावसादयोः॥ शंकरस्यनतिरस्कपादयोः॥४॥ सदानन्दगिरिर्निर्दक्षः श्रीमच्छै
वसुधाकरं॥ कृत्वाः प्रियमहेशाय श्लोकलिंगस्वरूपिणे॥५॥ स्वर्णधामलोकप्रीयो धनदसदनं नन्दनवनं तृणायेंदुका
कंविधिमपिबुराकं॥ क्षितिपतिं॥ नमन्यते नक्वाइ हतदवसृष्टेक्षितिपतिः॥ स्वरूपोलक्ष्मेमंस्मरतिसततंतोस्करखक
रो॥६॥ रसेन्दुनंदनृवर्षे विक्रमादित्यनृपतेः॥ पूर्णोयंकार्त्तिके शुक्ले त्रयोदश्यांसुसंग्रहः॥७॥ ॥इतिश्रीमन्महा
महेन्द्रमहाराणाश्रीसरूपसिंहप्रेरितश्रीमत्परमहंसपरिव्राजकाचार्यश्रीसदानन्दस्वामिविरचितेश्री[illegible]छैव
सुधाकरेपञ्चविंशः किरणः॥२५॥ समाप्तश्चायंशैवसुधाकरः॥ संवत् १९२२॥ शाके १७८७॥ आषाढकृ
ष्णतृतीयायां चंद्रवासरे॥ ॥लिपिकृतंसूर्यदत्तविजैपुरवासिना॥ पाभावायां सुजाणमलशर्मणा॥
लिखापितंब्रह्मचारीजीश्रीलक्ष्मणानंदजी श्रीपारंपर्यधर्मनिरूपणार्थं॥ श्रीशिवार्पणमस्तु ॥ ◌ ॥
यहपुस्तक मंबुईबंदरमें लक्ष्मीनारायणगवडब्राह्मणपरशुरामपुरकाने शिलाक्षरमें छपया॥ ब्रह्मचारीजी
श्रीलक्ष्मणानंदजीनेपुस्तकछपाया लक्ष्मीनारायणमारफत॥ शुभंमस्तु॥ ॥शुभम्॥ ◌ ॥
॥ श्री ॥ श्री ॥ ◌ ॥ ◌ ॥ श्री ॥ श्री ॥ श्री॥

॥ इतिश्रीशैवसुधाकरग्रंथसमांप्तम् ॥